





# शारदा

भाद्रपद-आश्विन १८८८

सप्टेम्बर-ऑक्टोबर १९६६

संपादकीयम्—

## कृष्णः सर्वत्र गीयते ।

कृष्णद्वैपायन-विरचितस्य विश्वमार्गदर्शकस्य दीपस्तम्भस्य भारतभू-भूषणस्य महाभारतस्य चिकित्सितावृत्ति-संपादन-श्रीगणेशः 'नारायणं नमस्कृत्य-' इति मङ्गलेन डॉ. रामकृष्ण गोपाळ भाण्डारकरैः १९१९ ख्रिस्ताब्दे कृतः यस्य भरतवाक्यं भाद्रपदे वदि ८-१८८८ इति-शुभपुण्य-तिथौ भारत-राष्टाध्यक्षैः डॉ. राधाकृष्णैः ससमारोहं गीतं पुण्यपुरी-पौराणां पुरस्तात् । धन्यास्ते भाग्यशालिनस्ते कृतार्थास्ते ते सर्वे पुण्य-पत्तनवासिनः यैः भाण्डारकर-प्राच्य-विद्या-संशोधन-मन्दिर-स्थं तत् 'श्रीकृष्ण-संकीर्तनंकर्णरसायनीकृतम्, प्रा. श्री. कृ. बेलवलकर, डॉ. वा. गो. पराञ्जपे, प्रा. ह. दा. वेलणकर, डॉ. प. ल. वैद्य,डॉ. रा. ना. दाण्डेकर इति ऋषिपञ्चकं राष्ट्राध्यक्षैः रजत-पत्र-समर्पणेन पूजयित्वा. संस्थायाः इतिहासे अननुभूतपद्धत्या ऋषिपञ्चमीपूजनं संपादितम् । श्रीमान् औन्ध-नृपतिः, डॉ. भाण्डारकर, श्री. सुखटणकर, श्री. उटगीकर, श्री. एजर्टन, डॉ. रघुवीर, प्राचार्य करमरकर इति सप्तर्षिभिः दिव्यलोकवासिभिः स्वीयस्य तपसः साफल्यम् अनुभूय यत् समाधानं प्राप्तं स्यात् तदपि अवर्णनीयं खलु । विश्वेतिहासे महाभारतस्य स्थानम् अद्वितीयम् । तत्र पुनः विश्वविद्यासंशोधनेतिहासे 'महाभारत' संशोधन-कार्यम् अनितर-साधारणम् । तत्रापि च 'महाभारत-'संशोधन-समाप्ति-समारोहस्वरूपं विद्यापूजकैः स्वीये जीवने अनवलोकितपूर्वम् ।

डॉ. राधाकृष्णैः मानव्य-माङ्गल्यार्थं, विश्वसंतोषसमाधानार्थं शान्तताप्रस्थापनार्थं च धर्मध्वजोत्तंसनं, धर्मदुन्दभिताडनं, धर्मशङ्ख-प्रपूरणं प्रस्तूय यत् समये समुचितं मार्गदर्शनं कृतं तेन पुनरपि समा-श्वासिताः वयं परधर्माक्रमणपीडिताः भारतीयाः । यदि राष्ट्राध्यक्षः स्वयम् अधर्म-प्राबल्य-खण्डनेन धर्मसत्तासंस्थापनेन च विश्वस्मिन् विश्वे भरतभूभाग्यभूषणत्वेन, संस्कृतिसंवर्धकत्वेन, संस्कृतविद्यासमर्थकत्वेन धर्मरक्षकत्वेन च अग्रतः सरति तर्हि नास्तिकमतोच्छेदनं धर्मश्रद्धानिर्माणं च 'महाभारत'— ज्ञानदीप-प्रकाशे धर्मप्रसारकाणां कृते नूनं सुकरी-भविष्यति । 'तदात्मानं सृजाम्यहम्...' इति गीतावचनस्य साक्षात्कारः अनेन सर्वान् धर्मश्रद्धान् संवादयिष्यति । करालेऽपि अस्मिन् कलिकाले किम् अन्यद् अपेक्ष्यते यदि—

कृष्णः सर्वत्र गीयते ।

---

२२-२४ पृष्ठेषु भारतीयद्रव्यस्थाकवयिता— श्री. शं. दा. देशवे सोलापुर

## चिकित्सित-महाभारत-विविध-पर्व-संपादकाः

| पर्व | संपादकः | पृष्ठसंख्या | प्रकाशनवर्षम् |
|---|---|---|---|
| आदिपर्व | व्ही. एस. सुखटणकर | ९९६ | १९३३ |
| सभापर्व | एफ. एजर्टन | ५१७ | १९४४ |
| आरण्यकपर्व | व्ही. एस. सुखटणकर | १११७ | १९४२ |
| ,, | ,, | | |
| विराटपर्व | डॉ. रघुवीर | ३६३ | १९३६ |
| उद्योगपर्व | सुशीलकुमार डे | ७३९ | १९४० |
| भीष्मपर्व | श्री. कृ. बेलवलकर | ८०२ | १९४७ |
| द्रोणपर्व (भाग १) | सुशीलकुमार डे | ११५९ | १९५९ |
| ,, (भाग २) | ,, | | |
| कर्णपर्व | डॉ. प. ल. वैद्य | ६९७ | १९५४ |
| शल्यपर्व | डॉ. रा. ना. दांडेकर | ५५६ | १९६१ |
| सौप्तिकपर्व | डॉ. ह. दा. वेलणकर | ११३ | १९४८ |
| स्त्रीपर्व | वा. गो. परांजपे | १२१ | १९४८ |
| शांतिपर्व | श्री. कृ. बेलवलकर | २५०० | १९६१ |
| ,, राजधर्म | | | १९५४ |
| ,, आपद्धर्म | | | |
| ,, मोक्षधर्म | | | |
| ,, मोक्षधर्म | | | |
| अनुशासनपर्व | डॉ. रा. ना. दांडेकर | ११२१ | १९६६ |
| आश्वमेधिकपर्व | प्रा. र. दा. करमरकर | ४७१ | १९६० |
| आश्रमवासिकपर्व | श्री. कृ. बेलवलकर | १७१ | १९५९ |
| मौसलपर्व | | ५५ | |
| महाप्रस्थानपर्व | | २४ | |
| स्वर्गारोहणपर्व | | ४३ | |

## सुखपृष्ठे महाभारत-दीप-प्रज्वालकाः

| | |
|---|---|
| १ श्रीमान् औन्धनृपतिः | २ श्री. व्ही. एस्. सुखटणकर |
| ३ श्री. सुशीलकुमार दे | ४ डॉ. रघुवीर |
| ५ डॉ, श्री. कृ. बेलवलकर | ६ एफ्. एजर्टन |
| ७ प्रा. र. दा. करमरकर | ८ रामचन्द्र उटगीकर |
| ९ प्रा. वा. गो. परांज़पे | १० डॉ. रा. ना. दाण्डेकर |
| ११ डॉ. प. ल. वैद्य | १२ प्रा. ह. दा. वेलणकर |

**२२ खण्डात्मकं महाभारतम्।**

# जर्मनीदेशो नाम गीर्वाणवाण्याः अपरं स्वग्रहम् !

बंगलोर-नगरे संस्कृतवाण्याः पुनरुत्थापने प्रयत्न-शीलायाः संस्कृत-विश्वपरिषदः उपक्रमं भारतस्य राष्ट्रपतिः श्रीराधाकृष्णमहोदयः करिष्यति। अस्मिन् विषये पुरा खलु भारतस्य प्रथमराष्ट्रपतिना दिवंगतेन डॉः राजेन्द्रसाद-महाशयेन शार्मण्यसंस्कृतपंडितैः कृतायाः संस्कृत-सेवायाः रचिता प्रशंसा स्मृतिपथम् अवतरति। स बभाषे—" शार्मण्य-पण्डितानां संस्कृत-भाषायाः अध्ययनेन, भारतीय-तत्त्वज्ञानक्षेत्रे गभीरावगाहनेन, संशोधनकर्मणा च वयं सर्वे भृशमुपकृताः। तस्य प्रारम्भः शार्मण्यपण्डितैः कृतात् भारतीय-संस्कृतेः गवेषणात् अभूत् इति।

अत्र लेखे संस्कृत-भाषायां स्थितानां विदग्ध-विचाराणामध्ययने शार्मण्यपण्डितैः कृतानां परिश्रमाणां परिचयं कमपि संपादयामः। शार्मण्य-पण्डितेषु प्रारम्भे विख्यातः बी. झिझेनबल्ग-महाशयः अन्ये च बहवः अद्यापि जीवन्तः प्राध्यापकाः तिष्ठन्ति।

सप्तदशशतके शार्मण्यदेशात् भारते आगतैः जर्मन-ख्रिस्तपरिव्राजकैः (ख्रिस्तमिशनरिभिः) प्रथमं तावत् भारतीयभाषाणां, प्रामुख्येन संस्कृतभाषायाः सूक्ष्मम् अध्ययनं कृतम्। तथा च समकालीनासु प्राकृत भाषासु अपि पारंगताः ते प्रस्तुत-भाषाणां व्याकरणं शब्दकोशं च व्यरचयन्। तेषां विद्वत्ताप्रचुरग्रन्थानां काव्यरचनानां च पठनेन तत्कालीनाः ब्राह्मणाश्च विस्मिताः अभवन्।

ख्रिस्त-धर्मप्रचारकः हेवरिश् रॉय-( १६००-८८ ) बव्हेरियाप्रदेशे दिलिंगरग्रामनिवासी आग्रा—श्रीनगर-गढवाल नगरेषु संस्कृतभाषासेवायां स्वकालं व्यतीतवान्। समकालीनानां संस्कृताभ्यासकानां युरोपीयविदुषां मध्ये एषः एव अग्रेसरः लक्ष्यते। रॉथ-महोदयेन सिद्धान्तकौमुद्याः प्रथमानुवादः कृतः। बाथीलोमस शिरागेन्नला ( १६८२-१७१९ ) महोदयः दक्षिणभारते तामीलभाषायाः व्याकरणं रचितवान्।

कालिदासस्य सर्वोत्कृष्ट-काव्यकौतुकस्य शाकुन्तलस्य प्रथमः शार्मण्य-भाषायाम् अनुवादः जॉर्ज फॉस्टर महोदयेन ( १७५४-९४ ) कृतः तथा गटे कविना प्रशंसितश्च 'ब्लूथ दस गोहन' ( विकसितवासन्तम् ) इति। भारतीयसंस्कृतिः तत्त्वज्ञानं च शार्मण्यतत्त्वज्ञस्य आर्थरशॉपेनहोअरमहोदयस्य अभ्यासविषयः अभूत्। उपनिषद्भिः अतितरां प्रभावितः सः उपनिषदो नाम 'अतिमानुषविचाराणां संकलनम्' इति अमन्यत।

ऑगस्ट-विल्यम-श्लेगेल-महोदयैः जर्मनसंस्कृतभाषायाः विषये

जर्मनीदेशे प्राध्यापकपदं विभूषितम् । बॉनविद्यापीठे तैः संस्कृत-प्राकृत-द्राविडादिभाषाणाम् अध्ययनम् अध्यापनं च कतिपयेषु जर्मनविद्यापीठेषु प्रारब्धम् । वैदिक-काव्यानाम् (लिरिकल् पोएम्स्) अध्ययने फ्रेड्रिश सअर्ट महोदयेन कृतः जयदेव-प्रणीत-गीतगोविन्दस्य जर्मनानुवादः जर्मन-वाङ्मये उच्चपदम् अलभत । प्रा. रुकर्ट-महोदयाः (१७८८-१८६६) अर्लंग्गेन नगरे प्राच्यविद्यानां प्राध्यापकपदं विभूषितवन्तः । तैः कतिपयेषां भारतीय-ग्रन्थानाम् अनुवादः कृतः । कृते अनुवादे नलदमयन्ती-कथा, अथर्ववेदश्च सविशेषम् स्थानम् अर्हन्ति ।

भारतात् प्रभुत्वरूपेण अलब्धभौतिकलाभः अपि जर्मनी-देशः. तस्य बौद्धिकसर्वस्वम् अपाहरत् ? इति शार्मण्यकवेः हॅरिश हेन महोदयस्य वचनं मननीयं खलु । मोक्षमूलर (मॅक्समुल्लर) महोदयैः कृता विशाल-ग्रन्थनिर्मितिः नाम न केवलं जर्मनी देशे अपि तु सकले युरोपखंडे भारतीयविद्याध्ययने संपादितं सर्वश्रेष्ठं यशः 'सेक्रेड बुक ऑफ द ईस्ट' 'प्राच्यपवित्र-ग्रंथानां प्रकाशकः सुविश्रुतस्य कवेः पुत्रः आसीत् । तस्य स्मृतिं तन्नामांकिताः भारते शार्मण्यसांस्कृतिकसंस्थाः जीवयन्ति । संप्रत्येव सांघिक-जर्मन-लोकराज्यस्य (फेडरल रिपब्लिक जर्मनी) साहाय्येन वाराणस्यां 'ऋग्वेद-संहितायाः प्रथमं पुनःप्रकाशनं बनारस-प्रकाशकेन कृतम् अस्ति ।

मोक्षमुल्लरादारभ्य अधुनापर्यन्तं विविधैः शार्मण्य-संस्कृतज्ञैः संस्कृतवाङ्मयगतस्य अमूल्य-निधेः रक्षणं वर्धनं च कृतम् । परिणामतः इदानीं तु जर्मनीदेशे कतिपये संस्कृतग्रंथानाम् अनुवादाः प्रकाशिताः दृश्यन्ते ।

जर्मनी-दूतावासे ज्येष्ठम् अधिकारिपदं कतिपय-संवत्सरपर्यन्तं विभूष्य सद्यः निवृत्ताः विल्फाईड नाले महोदयाः 'जर्मनी वेदानाम् अन्यत् स्थानम् (जर्मनी, वेदाज् होम) इति नामके ग्रन्थे कथितवन्तः--

'महायुद्धसमाप्त्यनन्तरं भारतेन स्वातन्त्र्ये प्राप्ते जर्मनीदेशे भारतीय-विद्यानाम् अध्ययनम् उत्तरोत्तरं विकासं प्रति अक्रामत । परा-धीनतया एव प्रत्यूहितः परस्परदेशयोः बौद्धिक-सबन्धः विकसितः विक-सिष्यति च । इदानीं तु पुरातत्त्वविषये भारतीय-विद्यासु च अध्ययने नवा आस्था प्रेरणां लब्धवती ।

जर्मन-पुरातत्त्व-विशारदाः भारतीयसंस्कृतेः अन्वेषकाः (इन्व्हे-स्टिगेटर्स) सन्ति । भारतीय-संस्कृतेः उत्कर्षस्य परिसीमा तथा मानवजातेः विकासाय देयभागः तस्या एव (ॲण्टिक्विटी) प्राक्कालताया-

मेव द्रष्टव्यः। संस्कृतभाषायाः ज्ञानेन विना अस्याः पुरातनतायाः ( ॲण्टिक्विटी ) अध्ययनं व्यर्थम् अशक्यं च। युरोपदेशीये ग्रीक-लॅटिनभाषयोः अपेक्षया भारते तत्त्वज्ञानस्य अध्ययनाय संस्कृतभाषायाः ज्ञानं महदावश्यकम् इति निर्विवादम्। अतः भारतसंस्कृतेः ज्ञानं संस्कृत-भाषायाः साधारणज्ञानेन विना मनाक् अपि शक्यं न दृश्यते। अतः एव पुरातत्त्वविद्याभ्याससमये संस्कृतभाषाशास्त्रस्य मूलतत्त्वाज्ञाने औदासीन्ये न श्रेयस्करं भवेत्--इति डॉ. नॉले महोदयाः स्वमतं प्रदर्शितवन्तः।

अधुना जर्मनीदेशे प्रमुखाः ग्रन्थालयाः संस्कृतभाषायाः ग्रन्थानां संकलनेन सुसज्जिताः भवन्ति। प्रायः सर्वेषु विद्यापीठेषु पुरातत्त्वग्रन्थानां शाखा-ग्रन्थालयाः सन्ति। प्रतिवर्षं पुरातत्त्वविषयक-संशोधनपत्रिकाः अत्र प्रकाशिताः सन्ति। तत्रापि कतिपयाः संस्थाः भारतजर्मन-निवासिनां सांस्कृतिकरज्जुभिः परस्परसंबन्धवर्धने प्रयत्नशीलाः दृश्यन्ते।

सांघिक-जर्मन-लोकराज्ये इदानीं तु पुरातत्त्वविषये द्वादश विद्यापीठासनानि ( युनिव्हर्सिटी चेअर्स ) सन्ति। अन्ये विश्वविद्यालयाः तुलनात्मक-भाषाशास्त्रविषयरूपेण संस्कृतस्य अध्यापनं प्रचालयन्ति। संस्कृतभाषया सह भारतस्य आधुनिकभाषायाम् अध्ययनम् अपि तत्र प्रचलति। अचिरादेव हिडलबर्ग-विद्यापीठेन स्थापिता इन्स्टिटयूट ऑफ साऊथ आशियन स्टडीज-दक्षिण-आशिया-अध्ययन-संस्था आधुनिक-वर्णमालायाः ( व्हर्नाक्युलर ) तथा प्रादेशिकभाषायाः अध्ययनम् अध्यापनं च कर्तुं प्रयत्नशीला दृश्यते। भारतीयप्रादेशिकभाषाणां संशोधनं कर्तुं जर्मनी-देशात् विद्यार्थिनः भारतदेशं प्रति आगच्छन्ति।

( जर्मन-वीकली-गत लेखस्य आधारेण लिखितः )

**नन्दकिशोर र. पत्तरकिने**

( नागपुरीय संस्कृत-भवितव्यम् (दि. ४–६–६६) साप्ताहिकात् साभारम् )

# पुण्यपत्तनम्-विद्यापीठस्य वाङ्मयशाखा श्री. श्री. दा. सातवळेकर-महोदयेभ्यः 'डी. लिट्' गौरवोपाधिसमर्पणम्

वाङ्मयशाखाध्यक्षः--

"मान्याः कुलपतिमहोदयाः,

माननीयाः सातवळेकर-कुलावतंसाः दामोदरतनूजाः श्रीपादशर्माणः स्वकीयेन अपूर्वेण वेद-संपादन-विवरण-संशोधनादिकार्येण लब्धकीर्तयः, विद्वत्तापूर्णानां संस्कारकरणक्षमाणां च नैकग्रन्थानां निर्मित्या ख्यातनामानः, अनुपमेन चित्रकलाचातुर्येण च लब्धवर्णाः विद्यन्ते। ते 'डी. लिट्' इति गौरवोपाधिं सर्वथैव अर्हन्ति इति पुण्यपत्तन-विद्यापीठस्य कार्यकारिण्या, संसदा, विद्वत्सभया विधिसभया च निर्णीतमस्ति अविसंवादित्वेन। ते महाभागाः प्रकृतेः अस्वास्थ्यात् अद्य असंनिहिताः सन्ति।

भारतीयानाम् अन्येषां च वेदप्रेमिणां कृते सुष्ठु मुद्रिताः, सुचारु संपादिताः, अल्पमूल्यतया सुलभक्रयाश्च वेदचतुष्टयसंहिताः प्रकाश्य महत्तमं कार्यं कृतं श्रीसातवळेकरमहोदयैः। न केवलम् एतत्। किं तु मराठी-हिन्दी-भाषयोः एतासां सविवरणः सुबोधः च अनुवादः एतैः भूरिपरिश्रमैः कृतः प्राकाश्यं च नीतः। गुजराथीभाषायामपि सटिप्पणीकः वेदानुवादः तैः विहितः। ऋग्वेदस्य दैवतानुसारिणीं संहितां ग्रन्थत्रये प्रकाश्य संशोधकानां कृते महत्वपूर्णं संदर्भविरचनं तैः कृतम्। इयं तेषां वैदिकी ग्रन्थसम्पद् संस्कारसंपन्नतां वर्धयेद् इत्यत्र नास्ति विवादः।

औन्धनगरे पण्डितवर्यैः महता परिश्रमेण संस्थापितं स्वाध्यायमण्डलं नियतिवशात् स्थानान्तरे, तत्र पुनः दूरसंस्थे पारडीग्रामे संरोपितम्। तस्मिन् गुरुकुलाश्रमे ते शताब्दीपूर्तिदेहल्यां वर्तमानाः, अद्य यावत् येन उत्साहेन पठन-पाठन-संशोधन-प्रकाशनैः, वेदसेवां संस्कृतविद्यासेवां च विदधति स उत्साहः नूनं तरुणान् अपि लज्जापयेत्।

'पुरुषार्थबोधिनी भगवद्गीता' नाम पण्डितसातवळेकराणां सहस्रपृष्ठात्मकः गीताभाष्यग्रन्थः। भगवद्गीतायाः किमपि विशिष्टम् इव दर्शनम् अस्मिन् ग्रन्थे लभ्यते। 'पुरुषार्थ'-नामकस्य मराठीमासिकस्य, 'अमृतलता' ख्यसंस्कृत-त्रैमासिकस्य, 'वैदिकधर्म' संज्ञकस्य च हिन्दीमासिकस्य संपादनं सातत्येन ध्येयवादित्वेन च ते कुर्वन्ति।

'वाल्मीकि-रामायणस्य समालोचना मराठीभाषानुवादः च',

'उपनिषद्-भाष्य-ग्रन्थमाला', 'महाभारत-संशोधनं', 'वैदिकधर्मः' च इत्यादयः तेषां ग्रन्थाः वैविध्येन पाण्डित्येन, सांस्कृतिकमूल्येन, संस्कार-करणक्षमतया च अलंकृताः विद्यन्ते। राष्ट्रभक्तिः समाजसेवा च इत्येतौ द्वौ अन्तःप्रवाहौ वर्तेते पण्डितवर्याणाम् अस्य गभीरस्य वाङ्मयवारिधेः। संस्कृतभाषायाः अध्ययनं सुकरीकर्तुम् तैः 'संस्कृतपाठमालायाः' चतुर्विंशतिमितानि पुस्तकानि लिखितानि।

चित्रकलाकौशल्यं नाम अन्यत् किञ्चिद् वैशिष्टयम् एतेषाम्। कला-नीत्योः अविनाभावः आत्मविकासं साधयति इति एतेषां मतं विद्यते।

औन्धसंस्थाने संपूर्णस्वराज्यस्थापनकार्ये संरक्षकदलस्थापनकार्ये च तैः सर्वात्मना प्रयतितम्। विघ्नैः पुनः पुनः प्रतिहन्यमानाः अपि श्रीसातवळेकराः प्रारब्धं कार्यं कदापि न त्यक्तवन्तः। पारडीग्रामे तैः संस्थापितः आश्रमः गीताभवनं च तेषाम् अविश्रान्तपरिश्रमाणां प्रतीके इव तिष्ठतः।

वर्धा-राष्ट्रभाषा-समित्या हिन्दीभाषासेवार्थं 'महात्मा-गान्धी-पुरस्कार'-प्रदानेन ते सभाजिताः। भारतस्य राष्ट्रपतिभिः अपि वार्षिक-गौरवानुदान-दानेन तथा प्रशस्तिपत्रेण च ते संमानिताः।

एवं सर्वथा एव एते महाभागाः पूर्वोक्तगौरवार्हाः इत्यत्र नास्ति कश्चित् संशीतिलेशः अपि। तद् इदानीम् अद्य अनुपस्थितान् पण्डित श्री. श्री. दा. सातवळेकरान् 'डी. लिट्' इति गौरवोपाधिसमर्पणेन संमानयेयुः कुलपतिमहोदयाः इति मया सविनयं प्रार्थ्यते।"

* * *

## अखिल-भारतीय-संस्कृत-साहित्य-सम्मेलनस्य स्वर्णमहोत्सवे ( ऑक्टोबर १९६६ )

### प्रथमः प्रस्तावः

अनादिकालादारभ्य भारतराष्ट्रस्य राजधानीरूपेण स्थितायां दिल्लीनगर्यां संपद्यमानम् इदम् अ. भा. संस्कृत-साहित्य-सम्मेलनाधिवेशनं प्रतिपादयति यत् " भारती " नाम संस्कृतभाषा " भारत"राष्ट्रस्य तथा एव स्वयंसिद्धा राष्ट्रभाषा वर्तते यथा इङ्ग्लण्डराष्ट्रस्य इङ्ग्लिश, जर्मनी-देशस्य जर्मन, जपान-राष्ट्रस्य जपानी इत्यादि । अस्माकम् आधुनिके लिखिते संविधाने राष्ट्रमुद्रा, राष्ट्रध्वजः, राष्ट्रगीतम् राष्ट्र-ललामभूतं वस्तुत्रयं निर्धारितम् अस्ति किन्तु ततः अपि अधिकमहत्वपूर्णं " राष्ट्रभाषा" इति वस्तु नैव निर्धारितम् । न केवलमिदम् अपि तु तत्पदमपि न कुत्रापि निर्दिष्टम् संविधाने । इयम् तस्मिन् महती त्रुटिः । सप्तदशपर्वणः (ऑफिशिअल लॅङ्ग्वेज) शासनभाषा-इति यन्नाम विद्यते तन्न समीचीनम् । तत् (लॅङ्ग्वेज् पॉलिसी) भाषानीति इति भवितुम् अर्हति । तथा च अष्टम-परिशिष्टस्य शीर्षकम् अस्ति केवलम् (लॅङ्ग्वेजेस्) भाषाः इति । तेन न कोऽपि निश्चितार्थबोधः जायते । तत् " प्रमुखाः भाषाः " इति भवितुम् अर्हति ।

" राष्ट्रभाषा " इति वस्तुनः समीचीन-अर्थबोधिनी कमपि राष्ट्रम् उद्दिश्य इयमेव यथा कस्यापि राष्ट्रस्य " राष्ट्रभाषा " सा एव यस्यां निखिलस्य तद्राष्ट्रस्य संस्कृतिः, परम्परा, तत्त्वविवेचनम्, ज्ञानभाण्डा-गारम् च इति वस्तुचतुष्टकम् अधिकादधिकपरिमाणे तिष्ठति । राष्ट्र-भाषायाः स्थूलं लक्षणम् इदम् यत् सा भाषा तद्-राष्ट्रस्य सर्वेषु प्रदेशेषु अभिज्ञैः अनभिज्ञैश्च अतीव प्रेम्णा आदरेण च सम्मान्यते । अस्माकम् भारतराष्ट्रे अस्याः व्याख्यायाः, अस्य स्थूललक्षणस्य च समाधानं "संस्कृत-भाषा " एव कर्तुम् प्रभवति न अन्या काऽपि भाषा । " राष्ट्रभाषा"विषये सा भाषा कति जनाः भाषन्ते ? " इति संख्यावाचकः प्रश्नः कदापि न समुद्भवति यथा सः वेदोपनिषदादि " राष्ट्रग्रन्थ " विषयेऽपि न समुत्पद्यते । एकभाषिके राष्ट्रे सा प्रायः सर्वैरपि शुद्धेन वा विकृतरूपेण वा भाष्यते किन्तु बहुभाषिके राष्ट्रे तद् कदापि न संभवति—या कापि भाषा गृहीता भवतु ! तत्र सा अल्पैः जनैरेव भाष्यते इति सहजमेव ।

अनेन विवेचनेन पूर्णतया सिद्धं भवति यद् अस्माकं भारतराष्ट्रस्य राष्ट्रभाषा संस्कृतभाषा ( नाम—भारती ) एव आसीत्, यत् सा एव

अधुनाऽपि राष्ट्रभाषा अस्ति, यत् च सा एव सर्वदा भविष्येऽपि राष्ट्र-भाषा रूपेण एव स्थास्यति यावत् कालपर्यन्तम् भारतम् भारतम् एव तिष्ठेत् ।

अतः इदम् संमेलनम् अस्माकम्-सर्वकारं सर्वान् 'भारतीय-जनसंघ'-सदृश-पक्षान् च प्रार्थयते- "राष्ट्रभाषा" इति पदम् उत्पाद्य तस्मिन् पदे संस्कृतं नाम "भारती" इति भाषां संस्थाप्य अस्माकम् संविधाने विद्यमाना उपरिनिर्दिष्टा त्रुटिः परिहर्तव्या । तदर्थम् (१) संविधानस्य सप्तदशपर्वणः शीर्षकम् "शासनभाषा" इति स्थाने "भाषानीतिः" इति करणीयम् । (२) तस्य ३४३ तमे परिच्छेदे निम्नलिखितं वाक्यम् प्रथम-उपपरिच्छेद-रूपेण प्रस्थापनीयम् यथा "भारत-राष्ट्रस्य राष्ट्रभाषा अनादिकालादारभ्य संस्कृतभाषा एव आसीत् अधुनाऽपि सा एव विद्यते, भविष्येऽपि अनन्तकालपर्यन्तम् सा एव स्थास्यति" इति । एवं विद्यमान-प्रथमपरिच्छेदस्य क्रमाङ्कः– (येन हिन्दी-भाषायाः स्थापना केन्द्र-शासन-भाषा-पदे कृता अस्ति–) द्वितीयः भवेत् । एवमेव, अवशिष्टानाम् उपपरिच्छेदानाम् क्रमाङ्काः एकैकेन अङ्केन वर्धिताः भवेयुः ।

तथा च संविधानस्य अष्टम-परिशिष्टस्य शीर्षकम् केवलम् "भाषा;" इति अस्ति तत्स्थाने "महत्त्वपूर्णाः भाषाः" इति करणीयम् ।

समर्थकौ (१) **पं. वसन्त अनन्त गाडगीळः** अस्य प्रस्तावस्य
(२) **डॉ. श्री. भा. वर्णकरः** प्रस्तावकः **श्री. ल. म. चक्रदेवः**

## द्वितीयः प्रस्तावः

अस्माकम् राष्ट्रस्य स्वयंसिद्धा राष्ट्रभाषा संस्कृतभाषैव विद्यते । सर्वकारेण सर्वैः सुशिक्षित-जनैरपि, तथा प्रवर्तनीयं यथा सा भाषा अस्माकम् राष्ट्रस्य सर्वेषु राज्येषु "महत्वपूर्णाभाषा"– रूपेण व्यवहृता भवेत् यतः सा राष्ट्रभाषा विद्यते यथा राष्ट्रध्वजः राष्ट्रगीतम् वा उपयुज्यते–व्यवह्रियते वा । संविधानेन कस्मादपि कारणात् हिन्दीभाषा "केन्द्रशासन भाषा" रूपेण संस्थापिता अस्ति तथा च लोकसभया आङ्गल-भाषा सह-केन्द्र-शासन भाषा इति नियुक्ता अस्ति कस्मादपि अन्यस्मात् कारणात् । इदम् अधिवेशनम् सर्वकारम् लोकसभां च प्रार्थयते यत् संस्कृतम् अपि द्वितीय-सह-केन्द्र-शासन-भाषा इति नियुक्तं भवतु ।

अस्य प्रस्तावस्य

समर्थकः **ल. म. चक्रदेवः** प्रस्तावकः **वसन्त अ. गाडगीळ**

# कथं वर्धिष्णुः स्याद् हिन्दुधर्मः

हिन्दुधर्मः कथं वर्धिष्णुः स्यात् ? भारतीयेषु हिन्दुधर्मानुयायिषु परिवर्तनवादिनः अपरिवर्तनवादिनश्चेति द्विधा भेदा विद्यन्ते । परिवर्तनवादिनः अन्यधर्मानुयायिभिः हिन्दुत्वस्वीकारे दोषं न मन्यन्ते । अपरिवर्तन-वादिनस्तु अत्र दोषं पश्यन्ति ।

तदत्र पक्षपातम् अनवलम्ब्य किञ्चिल्लिखामः । अपरिवर्तनवादिभिः हिन्दुधर्मे नूतनप्रवेशानङ्गीकारात् हिन्दूनां च परधर्मस्वीकाराङ्गीकारात् क्षयिष्णुः हिन्दुधर्मः जगतीतले । वर्धिष्णवश्च अपरे । तदिदं वयं दोषास्पदं मन्यामहे । अनेन हि सः चिरादेव विनष्टः स्यादित्यत्र न मनागपि शङ्का । पूर्वम् इण्डोनेशियादिदेशेषु विराजमानः हिन्दुधर्मः इदानीं भारतमात्रस्थितिः जात इत्येतदेव अस्य क्षयावस्थां गतस्य निदर्शनम् । एवम् अस्माभिः पुनरपि हिन्दुधर्मप्रचारणे जागरितव्यमिति निर्णीतम् ।

तदत्र उपायान् उपदिशामः । यथा हि राजा योगं क्षेमं च चिन्तयति, लब्धस्य परिपालनात् अलब्धस्य लाभात् च तथैव हिन्दुभिः ये हिन्दवः तेषां कथंचिदपि परधर्मस्वीकारः अङ्गीकर्तव्यः । दृढप्रयत्नः तदर्थमास्थेयः । ये च पुरा हिन्दुधर्मात् निर्गताः तेषाम् अपि च हिन्दुत्वं स्वाभाविकमेव अङ्गीकार्यम् ।

तदर्थमेव विषयः प्रपञ्चते । प्राक्कालादारभ्य हिन्दुधर्मस्य अन्यधर्मसमावेशकता प्रसिद्धा । चार्वाकमतमारभ्य शाङ्करमतपर्यन्तम् अस्मिन् हिन्दुधर्मे, विश्वरूपे विविधरूपाणीव सुखेन विराजन्ते । तदस्मिन् हिन्दुधर्मे इदानीं ख्रिस्तधर्मस्यापि समावेशः भवतु । कश्चित् ख्रिस्तानुयायी सन्नपि यदि हिन्दुधर्मानुयायी भवति तर्हि किमपराद्धं तेन । न हि ख्रिस्तकृष्णयोः अहिनकुलवद्वैरमासीत् । ख्रिस्तधर्मो हि भक्तिमार्गानुयायिनाम् एको भेदविशेषः । यथा भक्तिमार्गे शैवा वैष्णवा इति भेदाः सन्ति न च ते अहिन्दवः तथैव ख्रैस्ता अपि स्वं स्वं धर्ममाचरन्तः हिन्दवः भवेयुः । न हि तैः हिन्दुधर्मस्वीकारे अपि बायबलत्यागः आवश्यकः, चर्चत्यागः वा । एवं हिन्दवोऽपि यथारुचि ख्रिस्तं भजेयुः न वा । ख्रैस्तानाम् अपि मन्दिरगमनं पूजादिकं च यथेच्छं संमतं भवतु ।

एवं परस्पराणां सौमनस्य-संपादनेन एव हिन्दुधर्मः वर्धिष्णुः स्यात्, न तु द्वेषवर्धनेन । हिन्दवः ख्रिस्तमप्येकम् अवतारं कल्पयेयुः, ख्रैस्ताश्च भारतीयानवतारान् ।

सेयं बहुकालवर्तिनी सामाजिकी प्रक्रिया न तु सद्यःफलदायिनी । अत्र विषये प्रपञ्चं यथावाचकजिज्ञासम् अग्रे कुर्मः । इत्यलम् ।

दुर्गारामशर्मा
गोमन्तक-संस्कृत-परिषद्
केरी ( फोण्डा-गोवा )

# शशपण्डितः

कश्चित् शशकः आसीत्।
शरदभ्रशुभ्रः, माणिक्यनेत्रः, कार्पासः इव मृदुस्पर्शः।
सः वाराणसीं गत्वा पञ्चतन्त्रम् अधीत्य प्रत्यागतः।
सर्वे तं पण्डितं प्राहुः।
शशपण्डितः कस्यचित् अश्वत्थवृक्षस्य अधस्तात्
शिलापट्टके उपविशति।... पशूंश्च अध्यापयति।
वितरति शशः प्राज्ञे विद्यां यथैव तथा जडे।
कदाचित् सः सिंहघातिनः
चतुरस्य शशकस्य कथाम् अकथयत्।
अब्रवीत् च—'स भवान् मम पितामहः! हाँ!!'
अत्रान्तरे वृक्षात् भ्रष्टम् एकं शुष्कं पत्रं
शशपण्डितस्य पृष्ठे पतितम्।
चकितः, भीतः, उत्कर्णः सन्
सः निमेषार्धे स्वस्थानात् उत्प्लुत्य
पलायमानः ब्रूते—'वत्साः। धावत धावत!'
धाविताः सर्वे गुरोः पृष्ठतः।
आज्ञा गुरूणाम् अविचारणीया!
शिशून् पलायमानान् दृष्ट्वा
मृगज्येष्ठाः अपि पलायन्ते।... अश्वाः अपि पलायन्ते।
उष्ट्राः पलायन्ते, गजाः पलायन्ते, व्याघ्राः पलायन्ते।
महान् कोलाहलः अभवत्!—
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन्!
गुहायां सुप्तः सिंहः—
पञ्चतन्त्रीयशशकेन घातितस्य पुत्रः—
तेन कोलाहलेन प्रबुद्धः।
सः व्याघ्रं विरमय्य अपृच्छत्—
'अरे, कुतः पलाय्यते!'
सः अब्रवीत्—'यतः गजाः पलायन्ते।'

गजाः उष्ट्रान् निरदिशन् ।
उष्ट्राः अश्वान्, अश्वाः मृगान्, मृगाः शशपण्डितम् ।
सिंहः पण्डितं प्राह—
'त्वं भोः किमिति पलायसे ?'
स आह—'भिन्नं गगनम् ! भिन्नं गगनम् !'
सिंहः पृच्छति—'अत्र किं प्रमाणम्?'
पण्डितः प्रत्याह—'प्रत्यक्षं प्रमाणम् ।
मम पृष्ठे खण्डम् एकं पतितम् !'
सिंहः आह—'कुत्र, दर्शय । पश्यामः ।'
गताः सर्वे अश्वत्थवृक्षम् ।
पण्डितः दूरे स्थित्वा दर्शयति—
'त-त-तत्र,-व-व-वृक्ष-म-मूले,-श-श-शिलापट्टके !'
सिंहः शिलापट्टकम् उपसर्पति ।
सर्वेषा उरांसि धडधडायन्ते ।
अत्रान्तरे वायुवीचिः समागता ।
चलितानि हरितानि पर्णानि ।
अवशीर्णानि जीर्णानि ।
सिंहः प्रहसन् आह—'शतं गगनखण्डानि पतितानि !
धावत ! धावत !'
सर्वे प्रहसिताः ।
पण्डितः बिलं प्रविष्टः ।
चपलाः बटवः
बिलं परितः मण्डलेन नृत्यन्ति ।
सतालिकं गायन्ति च —
'पण्डित पण्डित ! विद्यामण्डित !
घटितं गगनं, दर्शय वदनम् !
पण्डित पण्डित !....'

'श्रीकृष्ण' प्रा. कृ. श्री. अर्जुनवाडकर
सुभाषनगरम्, पुण्यपत्तनम् २

# न मातुः परदैवतम् ।

सहृदयाः । कियन्तो नाम मन्दमतिभिरस्माभिर्वाचाम् अगोचरा वक्तव्याः श्रीमातृदेव्या गुणाः कियच्च प्रतिपादनीयं गौरवं तद्भक्त्याः । यथैव स्वजीवनिर्विशेषम् उपजीविता वयं, यथैवैतामुपलम्भिताः सुखैक-विषयां दशाम्, यथैव प्रीतिपुरस्सरम् उपलालिताः पोषिताः संवर्धिताश्च तस्याः श्रीमातृदेव्याः कियतो वा गुणान् कियत् कालं वदत्वियं रसना ? नूनं तल्लेखने कल्पपादपशाखाया अप्यपर्याप्ता लेखनी, आकाशनिर्विशेष-विस्तारमप्यपरिपूर्णमेव पत्रम्, सिन्धुसमधिकाऽपि नालं भविष्यति मसी, वाक्पतिरपि न प्रभविष्यति वर्णयितुम्, न वा वेतण्डतुण्डोऽपि लिखितुम् ।

महाशयाः । निपुणं तावद्विचारयत चेतसि नैसर्गिकस्नेहबहुलेषु सकलेष्वपि जगति जायमानेषु वस्तुषु कस्य वा प्रथमं निर्देष्टव्यं नाम ? किं राज्ञः ? उत बान्धवस्य ? आहोस्वित् सुहृदः ? उताहो आचार्यस्य ? उत पितुः ? अथ वा श्रीमातृदेव्याः ? नूनं प्रतिपन्न-विचाराः सर्वेऽपि यूयम् अङ्गीकरिष्यथ यन्न श्रीमातरम् अन्तरा कस्यापीति । अहो! कियत्यो नामोपकृतयोऽस्मासु श्रीजनन्याः । पश्यत तावच्छैशवम् । यानवलोक्यापि बान्धवा अपि पिदधीरन् नयनयुगलम्, हन्त! तेष्वेव विलुठतः पुरीषादिषु शिशून् का वा मातरम् अन्तरा प्रीतिपुरस्सरं प्रमोदमाना विमलीकरिष्यति? का वा कदाचिदपि दुस्सहगदविह्वलीक्रियमाणे बालके स्वयं सुदुष्करम् अपि पथ्यम् आचरन्ती निराकरिष्यति व्याधिम् ? का वा असह्यवेदना-जर्जरीकृतं पश्यन्ती तनयं क्षुधापीडिताऽपि विस्मरिष्यति अन्नम् ? का वा स्वप्राणपणैरपि कामयेत शिशोर्जीवनम् । का वा अनुपहतेनापि स्वचे-लाञ्चलेनापनेष्यति वदनसंलग्नं धूलीपटलं डिम्भस्य ? कश्चित् क्वचिद् दृग्विषयो भवतां पदार्थः यः सदृशो मातुः ।

चिरायापि अन्विष्यन्तो वयं न किल विलोकयामो मातृनिर्विशेषं वस्तु । प्रदीर्घेणापि कालेन सुप्रसादितोऽपि देवो देवी वा न मनागपि सहते स्ववैरुध्यम् । श्रीमातृदेवी तु शिशुनाऽनभाष्यमाणा वा, क्रोधाद् आह-न्यमाना वा, गेहान् निराक्रियमाणा वा, असम्भाष्यमाणा वा, दुरवस्थाम् आपादिता वा, न किञ्चिदपि कदाचिदपि विरुद्धमनुध्यायति पुत्रस्य । प्रत्युत मङ्गलम् एव आशास्ते । अत एव श्रीशङ्कराचार्याः "कुपुत्रो जायेत क्वचिदपि कुमाता न भवति" इत्याहुः । यथा धरणिरपक्रियमाणाऽपि न प्रत्यपकरोति, मलीमसम् अपि निन्द्यम् अपि प्राणिशिशुभिः समुत्सृष्टं स्वश-रीरे सुखं धारयति पदार्थम्, तेन च न मनागपि क्लिश्यति, तथैव मातापि स्वशिशुसमुत्सृष्टं निषिद्धम् अपि पुरीषादिकं विमलेऽप्यङ्के धारयति न

## न रत्नमन्विष्यति मृग्यते हि तत् ।

'संस्कृत-चन्द्रिका' संस्थापकसंपादकैः कलकत्ता-नगरे 'मातृभक्तिः' इत्यस्मिन् विषये संस्कृतमाध्यमेन निखिल-भारतीय-निबन्धस्पर्धा संयोजिता। तत्र स्पर्धायां प्रथमक्रमाङ्कत्वेन 'विद्यावाचस्पति'-पदविजेता निबन्धोत्तमः श्रीमदप्पाशास्त्रिराशिवडेकराणां कोल्हापुरनगरस्थानाम् इति निरणायि परीक्षकैः। यस्मिन् अङ्के प्रथमपारितोषिकसंपादकं तद् निबन्धरत्नं प्रकाशितं सः संस्कृतचन्द्रिकाङ्कः संप्रति दुर्लभः। परं विलिङ्गडन-महाविद्यालय-(साङ्गली) प्राध्यापकैः श्री.पु.ना. वीरकरैः चन्द्रिकाङ्कात् चिराय समुद्धृतं निबन्धरत्नम् इदं 'शारदा'-प्रकाशनार्थम् सदयम् उपहारीकृतम् अत्र प्रकाश्यते शारदोपासकानां संतोषाय। कथं नाम संपादनीयम् आनृण्यं प्रा. पु. ना. वीरकराणां, नैव जानीमहे। इत्थमेव सर्वैः 'शारदा'मित्रोत्तमैः साहितीरत्नवितरकैः भवितव्यम् इति साग्रहं संसूचयामः। महाविद्यालयसंस्कृताभ्यासक्रमे निबन्धरत्नम् इदं समाविष्टं भवतु एतदर्थं युक्तैः युक्तम् आचर्यताम् इत्यपि नः साग्रहं प्रार्थना।

**संपादकः।**

---

मनागपि त्रस्यति प्रत्युत प्रमोदते। अहं पुनर्मन्ये सर्वंसहाम् अप्यतिशेते गुणैः श्रीमातृदेवी। तथा हि। सहते क्षितिः सर्वदा सर्वेषाम् अपि दुश्चेष्टितानि किन्तु नैवं विधेयम्, अननेयती वो हानिरिति न कदाचिदुपदिशति। श्रीमातृदेवी तु सन्ततमुपदिशन्ती प्रतिनिवारयति दुष्कर्मणः सकाशात् तनयान्।

यथा चोपदिशति सत्कर्माणि श्रीमाता न तथा गुरुरपि। यथा च तयोपदिश्यमानः शिशुर्दुरध्यवसायाद् विरमेत् आकलयेच्च साध्वसाधुभावम् न तथा चिरायाप्यनुशास्यमानो गुरुणा। अत एव मनुराह।

उपाध्यायान् दशाचार्य आचार्याणां शतं पिता।
सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते ॥

सहृदयाः। यया शिशुसुखैकाभिलाषुकया दुःसहतमा अप्यनुभूयन्ते दशाः, हा धिक् कथं तामेव विस्मरत। अहो केयं दुरात्मता? कोऽयं व्यामोहः। केयं निद्रा? किमिदं नैर्घृण्यम्? जागृत जागृत। पूजयत मातरम्। सेवध्वं सुखानि। निराकुरुत दुःखानि। आयत्तीकुरुत स्वर्गम्। सम्पादयत यशः। नयत देवैरप्यभ्यर्चनीयताम् आत्मानम्। इति शिवम्।

* * *

## श्रीशः शरणम् ।

श्रीमत्सु श्रौत-स्मार्त-कर्मानुष्ठान-तपोमहिम-विराजमानेषु, भारतवर्ष-माङ्गल्यनिदान-भगवत्प्रसाद-संपादक-विविधश्रौतयागानुष्ठिति-निरतेषु पूर्वोत्तरमीमांसादिशास्त्र-पाण्डित्यपूर्णाध्यापन-परंपरा-संधारकेषु—

## श्रीदोरेस्वामिशास्त्रिचरणेषु

सभक्त्युन्मेषं साष्टाङ्गं प्रणमन्तो वयं विज्ञापयामः ।

सुधीवरेण्याः !

'ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद् वैदिको धर्मः, तदधीनत्वाद् वर्णाश्रम-भेदानाम्,– इत्येवं भगवत्पादसूचित-ब्राह्मण्य-रक्षणार्थमेव स्वसुखनिरभिलाषं स्वीयायुर्गणरात्राण्यतिवाहयतां संदर्शनेन नितान्तं परिपूताः स्मः ।

'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।' इत्येवंविधभगवदादिष्टस्वकर्माभिन्नभगवदर्चनप्रवणाः सत्पुरुषाः प्रायो हि विरलाः । तदीदृशे करालेऽपि काले, सर्वसिद्धिदातृस्वकर्मानुष्ठानपथं मुख्यकल्पेनानुसरतां भगवत्प्रीतिपात्राणां तत्रभवतां, यत्सत्यम् अधमर्णं संपूर्णं भारतवर्षम् इत्युक्तिर्नात्युक्तिकोटिम् आटीकेत । अत एव अद्य,

पृथिवी सलिलं तेजो वायुराकाशमेव च ।
सूर्याचन्द्रमसौ सोमयाजी चेत्यष्टमूर्तयः ॥

इत्यष्टमूर्तिभिः जगत्रयी-रक्षण-दक्षिणस्य भगवतः सर्वमङ्गलाजानेः स्वरूपभूतान् तत्रभवतः सोमयाजिनो दीक्षितप्रवरान्, एतत्सम्माननपत्र-बिल्वसमर्पणेन संपूजयन्तो वयं, भारतवर्ष-प्रसूति-निमित्तां स्वीयभागधेयस्य परां काष्ठाम् अधिरूढा इत्यत्र नास्ति संशीतिलेशः ।

इत उत्तरम् अपि दीर्घायुरारोग्य-मानुष-दैव-वित्ताभिवृद्ध्यादि-निखिल-कल्याणप्रदानेन भगवान् लीलाविश्वम्भरः, तत्रभवत्सदृशान् भारतराष्ट्राधारपुरुषान् नित्यम् अभिरक्षतात् इत्येव तच्चरण-सरसिजयोः संततम् अभ्यर्थयामहे इति ।

निजश्रावणसितषष्ठ्याम्
भानौ १८८८ शाके
२१ ऑगस्ट १९६६

तत्रभवदनुरागिणः
वैदिकधर्मादरभाजः पुण्यपुरीवासिनः

---

**वैदिक-सत्कार-समितिः पुण्यपत्तनम्**

# सोमयाजि-दोरेस्वामि-सत्कृति-समारोहः

**पुण्यपत्तनम् – दि. २१ ऑगस्ट—**

" काँग्रेस-पक्ष-कार्यकारिणीसभार्थं चतुर्दशलक्ष-रूप्यकात्मकं धनं व्ययीभवति इति वार्तापत्रेषु पठ्यते। परं केनचित् दीक्षितेन सोमयाजिना यागादिषु सर्वस्वार्पणेन लोकहितकाम्यया सहस्ररूप्यकेषु व्ययीकृतेषु 'अहो अपव्ययः!' इति आक्षिप्यते। कोऽयं न्यायः? यज्ञसंस्था न कदापि स्वार्थपरायणा। प्रत्युत सा सर्वलोककल्याणार्थं धनधान्यसमृद्ध्यर्थं देवतागणम् उद्दिश्य प्रार्थनापरा विद्यते। अतः न सा दूष्या यज्ञसंस्था, न दूष्याः दीक्षिताः, प्रत्युत सत्कार्याः ते समाजेन। यज्ञयागानुष्ठानेन भारतीय-संस्कृतिपरंपरासंरक्षकाः ते भृशम् उपकुर्वन्ति समाजम्।" इति स्वात्मा प्रकटीकृतः अध्यक्षत्वेन म. म. प्रा. **दत्तो वामन पोतदारैः** सोमयाजि-दीक्षित—**दोरेस्वामिशास्त्रि**-सत्कृति-समारोहे।



सोमयाजी दोरेस्वामी

पुण्यपत्तनस्थ-वैदिक-सत्कार-समिति-संयोजितः, '**शारदा**'-**कारैः** पुरस्कृतः समारोहविशेषः अयं टिळक-विद्यापीठ-सभागृहे सुसंपन्नः।

'शारदा'-कारैः समिति-प्रधानकार्यदर्शित्वेन स्वागते व्याहृते वैदिक-संशोधन-मण्डलप्रतिनिधित्वेन पं. **त्रिविक्रम धर्माधिकारी**, महानगर-पालिकाप्रतिनिधित्वेन श्री. **दुर्गादत्त शर्मा**, गीर्वाणवाग्वर्धिनीप्रातिनिध्येन पं. **शेण्डये गणेशशास्त्री** इ यतेषां गुणगौरव-परेषु भाषणेषु जातेषु विद्यावाचस्पति पं. **कवीश्वर दत्तात्रेयशास्त्रि**गुरुचरणैः पठितं संमानन-पत्रम्। ततः सभाध्यक्षैः पं. दोरेस्वामिशास्त्रिभ्यः श्रीफल-चन्दनहार-वस्त्र-संमाननपत्र-सपादशत (रू. १२५)-दक्षिणादिकं समर्प्य पूजिताः ते। अध्वर्युत्वेन यागादिषु महत्त्वपूर्णं कार्यं कुर्वाणाः पं. **बिट्टेशदीक्षिताः** अपि पूजिताः सभाध्यक्षैः।

" मैसूर-महाराष्ट्र-भाषिक-कलकले परां कोटिं प्राप्ते अपि पुण्य-पत्तने मैसूरस्थं विद्वद्वरं दीक्षितं पूजयित्वा विद्या-पावित्र्यं संरक्ष्य अत्र

॥ श्रीः ॥

श्रीमत्-परमहंस-परिव्राजकाचार्यवर्य-श्रीमच्छंकर-भगवत्-पाद-प्रतिष्ठित-श्रीकाञ्ची-कामकोटि-पीठाधिप-जगद्गुरु-श्रीमत्-चन्द्रशेखरेन्द्र सरस्वती-श्रीपादादेशानुसारेण-श्रीमत्-जयेन्द्रसरस्वती-श्रीपादैः क्रियते नारायणस्मृतिः ।

महीशूरपुराभिजनाः सर्वपृष्टाप्तोर्याम-सोमयाजिनः ब्रह्मश्री-दुरै-स्वामिदीक्षिताः आगामि-विश्वावसु-फाल्गुन-बहुलैकादशीम् आरभ्य पराभव चैत्रबहुलप्रथमापर्यन्तं सप्तविंशतिदिनसाध्यं **वाजपेयमहायज्ञं** गरलपुर्यपरपर्याय-नञ्जन्कुड्नगरे श्रीनञ्जुण्डेश्वरसन्निधौ अनुष्ठास्यन्तीति विदित्वा मोदामहे ।

आस्तिकाः अधिकधनादिसामग्रीसाध्याय अस्मै यज्ञवराय सर्वात्मना साहाय्यम् अनुतिष्ठन्तः सहयोगम् आतन्वन्तश्च यज्ञेश्वरप्रसादभाजो भूयासुरित्याशास्महे ।

यात्रास्थानम्
मन्नापोर्लूर (आन्ध्र प्रदेश) **नारायणस्मृतिः**
विश्वावसुपौषबहुलत्रयोदशी

---

संस्थापितः आदर्शः महाराष्ट्रेषु सर्वैः सर्वत्र अनुकरणीयः" इति भूरि भूरि प्रशंसां कृत्वा संयोजकानां योजकताविषये श्री. दुर्गादत्त शर्मा-महोदयैः संसूचितम्- "पुण्यपत्तने १९५६ वर्षे संपन्नस्य वाजपेययागस्य पाषाणस्तम्भरूपं स्मारकं रचयितुं प्रवृत्ता श्रूयते वाजपेय-याग-समितिः । अनया समित्या पं. दोरेस्वामिशास्त्रिणां वाजपेयस्य कृते स्वनिधितः साहाय्यं दत्वा स्वकार्यविस्तारः संपादनीयः ।

सत्कारं स्वीकृत्य सगद्गदितकण्ठाः पं. दोरास्वामिशास्त्रिणः सत्कारोत्तरभाषणे अवोचन् "क्व मैसूरविषयः क्व पुण्यपत्तनम् ! विद्यासत्कृतिभावनां पुण्यपत्तनस्थां साक्षात्कृत्य भृशं तृप्तोऽस्मि । मया संकल्पितस्य वाजपेयस्य कृते सर्वात्मना सहकार्यं प्रार्थये ।"

पं. पराञ्जपे विनायकशास्त्रिभिः धन्यवादेषु समर्पितेषु समाप्तं सत्कृतिसमारोहकार्यम् ।

---

* पूर्वं वाजपेययागानुष्ठानार्थं कृतसंकल्पेभ्यः दीक्षितेभ्यः 'काञ्ची'-श्रीचरणैः समर्पितं शुभाशीर्वादपत्रम् । परं तदानीं नैकविघ्ननिर्माणाद् अननुष्ठितः यागः संप्रति आगामिनि शरदृतौ भविता ।

# केषांचित् संशोधकानां परिसंवादः ।

**प्रथमः** — अयि भोः! पुरातन-पुस्ती-पुस्तकादीनां कस्यचित् विक्रेतुः गृहं गतवान् अहं, पुरोत्पीडात् कथमपि रक्षितानि अनेकानि पुस्तकानि त्रुत्पत्रकेषु लग्नः द्रापादिः दूरीकरणमग्नं तं विक्रेतारम् अपश्यम् । तत्संनिधौ उपविष्टेन मयापि कानिचित् पुस्तकानि निरीक्षितानि । तन्मध्याद् इदं पुस्तकं मम हस्ते पतितम् । मुखपृष्ठं अस्य विगतमेव । अंतर्गतानि पत्राणि तु कानिचित् विदीर्णानि अपराणि मध्ये मध्ये जीर्णानि । तथापि दिष्ट्या मुख्यः ग्रन्थः समग्रः अविच्छिन्नः एव, इति समीक्ष्य, तं तत्रैव त्वरितं पठित्वा, मूल्यमापनाय विक्रेतारं अवसरं न दत्वा, तस्य हस्ते रूपकद्वयं निक्षिप्य, पुस्तकं कक्षपुटे वस्त्रप्रावृतं कृत्वा, सत्वरातिसत्वरम् अत्रोपेतोऽहम् । अमूल्यो ग्रन्थः हस्तगतः इति मन्ये !

**द्वितीयः** — दर्शय तावत् । क्वासौ महामूल्यो ग्रन्थः ?

**प्रथमः** — एवम् अत्रास्ति । सम्यक् परीक्षणं करोतु भवान् एतस्य ।

**द्वितीयः** — (ग्रन्थं गृहीत्वा, प्राथमिकानि कानिचित्पत्राणि सावकाशं निरीक्ष्य, इतराणि तु त्वरितमेव संशोधयित्वा ) आम् । संगीतं सौभद्रम् नाम नाटकम् ! श्रीराम इति नामधेयेन कविना संस्कृतभाषायां विरचितम् इति तु सुस्पष्टमेव ।

**तृतीयः** — ( दूरतः एव ग्रन्थं निरीक्ष्य ) मुद्राङ्कितः खलु समग्रग्रन्थः संस्कृतभाषायाम् । तेन हि अतिपुरातन एव स्यात् !

**द्वितीयः** — कवेः नामनिर्देशः तत्सबन्धि-पत्राणां विदीर्णत्वात् जीर्णत्वात् च समग्रः पठितुम् अशक्यः एव! तथापि श्रुणुतः भवन्तौ । यत्पठितुं शक्यं पठामि । ( मन्दं मन्दं पठति )

" . . .विरचितं संगीत-सौभद्रं नाटकं गीर्वाणवाण्यां कविश्रीरामस्य साहाय्येन वितरामः । "

**प्रारम्भिकी** एषा साकी —

" कालिदास-कवि-कृति-मधुररसान् अहर्निशं भजमानाः ।
विरसितरसिका इदं हि तिक्तं सेवन्ताम् इति सुमनाः ।। "

अस्याः गीतिकायाः एतौ द्वावेव चरणौ पठितुं शक्यौ । तृतीयः नष्टप्रायः एव!

**प्रथमः** — को विषादः ! एतौ द्वौ एव पर्याप्तौ कवेः कालनिर्णयाय । तौ एव स्पष्टं कुरुतः यद् अस्य नाटकस्य विरचिता कविः श्रीरामः प्रायः महाकवेः कालिदासस्य समानकालीनः एव स्याद् इति ।

**तृतीयः** –– कथं तावत् !

**प्रथमः** –– अहो नु खलु ! मधुररसयुक्तानि पक्वान्नानि अहर्निशं

भक्षयित्वा" विरसितरसिका: "भवितुं कतिपयो नाम कालावधिः अवश्यः पर्याप्तो वा इति स्वमनसि विचारितं ननु भवता !

**तृतीयः** —– एवं खलु ते भावार्थः ! सम्यक् समर्थनं ननु ! सभाजनार्हो भवान् !

**द्वितीयः** —– किन्तु नाटयाचार्याणां किर्लोस्करमहोदयानां" संगीत-सौभद्र" इति नाटकं मराठी-भाषायाम् अपि वर्तते ! कथं नाम तत् !

**प्रथमः** —– पठितस्तावत् सोऽपि ग्रन्थो मया प्रसंगवशात् । उभययोः एनयोः कविवर्ययोः विरचन-कुशलत्वं-प्रतिभासंपन्नत्वं च सम्यग् विचार्य, तत्संबन्धि मदीयं निश्चितं मतं प्रस्थापयितुं कृतत्वरोऽहम् अत्र आगतः ! किन्तु एषः सुनामा कविः श्रीरामः प्रायः महाकविकालिदासस्य समानकालीनः एव संभाव्यते इति निश्चाययितुं इयतो कालः व्यतीतः नु !

**द्वितीयः** — भवतु । उच्यतां यत् किमपि संशोधितं प्रस्थापितं वा स्वमनसि भवता ।

**तृतीयः** — " संगीत-सौभद्र " इति मराठी भाषायां यत् नाटकं विद्यते, तत् अस्य संस्कृत-सौभद्रम् इति नाटकस्य अनुवादः एव स्यात् इति तु न वितर्कयति भवान् !

**प्रथमः** —– सम्यक् अनुमापितं भवता ! महाकवि-कालिदास-विरचितस्य " अभिज्ञान-शाकुन्तल "-स्य किर्लोस्करमहोदयेन मराठी-भाषायां कृतः अनुवादः " संगीत-शाकुंतल " इति नाम्ना उपलब्धः । पठितश्च भवद्भ्याम् । तथैव समानप्रतिभासंपन्नस्य मान्यवर-श्रीरामकवेः " संस्कृत-सौभद्रम् " इति मूल-संस्कृत-नाटकस्य, मराठी-भाषायाम् अनुवादः " संगीत-सौभद्र "-इति नामान्वितः तेनैव कविवरेण किर्लोस्करेण कृतो भवेत् इति आशंसितुं को नाम व्यतिकरः !

**द्वितीयः** —– न मे मतं भवद्भिः विरुद्धम्, अपि तु ....

**प्रथमः** — मा विरमतु भवान् । यद् गदितव्यं तत् प्रस्तूयताम् ।

तृतीयः, —– क्षणमात्रं तिष्ठतः भवन्तौ । अत्र मत्समीपे " संगीत-सौभद्र " इति पुस्तकं वर्तते । पठावः तावत् संस्कृत-संगीत-सौभद्रेण सहैव तदपि । तेन तुलयितुं सुकरं भवति ।

**द्वितीयः** — प्रथमः कल्पः । ( किंचित् कालं ग्रन्थद्वयस्य सहपठने यापयित्वा, " प्रथमा " भिमुखं भूत्वा ) निर्दोषं खलु संशोधनं भवतः ! " राधाधर-मधु-मिलिन्द " इत्यादयः गीतिकाः, तथा च अन्यानि अनेकानि भाषितानि स्पष्टीकुर्वन्ति यत् " मराठी सौभद्र " इति एषा किर्लोस्कर-कृतिः, कविवर्य-श्रीरामस्य मूलभूत- " संस्कृत-सौभद्रस्य " प्रायः शब्दशः अनुवादः एव । नान्यत् किंचिदपि । निर्गतविशंकोऽस्म्यधुना !

**तृतीयः** –– किन्तु, "नाटक-रचयितुः प्रार्थना" "रणधीरा श्रीवरवरद..." इत्यादि-गीतिका किर्लोस्कर-नाटकस्य अन्तिमे पृष्ठे पठिताऽधुना। कविवर-श्रीरामस्य ग्रन्थे न सा दृष्टिगोचरा! सा....

**द्वितीयः** –– अलं तेन। क्षुल्लकं तत्। नात्रास्माभिः विचारार्हम्। ("प्रथमं" प्रति) किर्लोस्करदेवलादयः मराठीकवयः केवलम् अनुवादकाः एव इति भवदीयं मतं तेषां तेषां कवीनां भक्तगणाः अप्रियमेव मन्येरन्!

**प्रथमः** — प्रियं वा अप्रियं वा। तत्र का परिदेवना! विशुद्धा संशोधकीया दृष्टिः सत्यान्वेषणे एव दत्तावधाना भवितुम् अर्हति! अभ्युपेतम् एतत् संशोधकैर्ननु?

**तृतीयः** –– निश्चितमेव!

**द्वितीयः** — ("तृतीयं" प्रति) सुनाम्नः देवलकवेः निर्देशः कृतो भवताऽधुना किर्लोस्करेण सह। अपि देवलकवेः "मराठी-शारदा" इति नाटकं तुलितं भवता "मराठी-सौभद्रेण" सह?

**तृतीयः** –– अथ किम्। (किंचित् विमृश्य "प्रथमं" प्रति) "मराठी-शारदा" इति नाटकस्य मूलभूतो ग्रन्थः अपि मृग्यो भवता। इति भवन्तं सादरं साग्रहं च सूचयामि। दिनेषु गच्छत्सु "शारदा-नाटकम्" इति उपाह्वः गीर्वाणवाणी-मण्डितः ग्रन्थः परमप्रयत्नबाहुल्येन उपलब्धो भविष्यति इति सुदृढम् आशास्महे!

**द्वितीयः** — न केवलम् एतावदेव! "मराठी-सौभद्र" "मराठी-शारदा" च एतयोः द्वयोः नाटकयोः रचनापद्धतिः इयती समाना एव संपाद्यते यत् "सौभद्र" स्य तथैव "शारदा"-नाटकस्य च रचयिता कविः मूलतः एक एव संभाव्यते! (किंचित् विमृश्य) "मराठी-सौभद्र"-किर्लोस्करमहोदयैः अनुवादितम् तस्य आदि रचयिता श्रीराममहोदयः कविः इति सम्यक् संस्थापिते "मराठी-शारदा"-नाटकमपि अनुवादितमेव, तस्य आद्यः कविरपि श्रीराम-कविवरः एव, नापरः। इति स्वभावसिद्धमेव प्रतिभाति मे!

**तृतीयः**—यावन्नापि षण्मासा व्रजन्ति तावदेव नाट्याचार्य-श्रीरामविरचितं "संगीत-शारदा-नाटकम्" अस्माकं हस्तगतं भवेत् इति सुनिश्चिता मे मतिः! बद्धकटिना भाव्यं भवता अन्वेषणकार्ये अस्मिन्।

**प्रथमः** — तत्रैव मे प्रयत्नाः! यावत् शक्यं विधास्यामि। अपि च मनसा धारयतु भवान् यत्

"न सर्वेश्वरो दृढनिश्चयस्य फलम् अदत्तं रक्षति" इति।

**द्वितीयः** — **तृतीयश्चः** –– विजयताम् अस्मद्वयस्यः।

य. ल. गुण्ये

सुभाषनगरम् पुणें २

# हन्त ! भारतीया दुरवस्था

आत्मज्ञानपरा विरक्तिविमला ध्यायन्ति यं योगिनो
यन्नामस्मरणं भवोद्भवभयं छित्त्वा नृणां मुक्तिदम् ।
आर्तानां शरणं नितान्तमधुरं यत्पादपद्मं परं
सर्वेषां वितनोतु शं स भगवान् दीनानुकम्पी हरिः ॥१॥

विद्यावृद्धिकलाविलासभवनं यन्मङ्गलं पावनं
यत्संश्रित्य दिगन्तकीर्तिकृतिनः श्रीशारदासेवकाः ।
यद्रम्यैश्च सु-[1]वर्णकाव्यकुसुमैः सालंकृतं सूरिभिर्
वाग्देवीपदपद्ममेव सुभगं ध्यायाम्यहो ! सुन्दरम् ॥२॥

संप्राप्ताश्रमधर्मपालनपरैः सद्ब्राह्मणैर्वैदिकैः
स्वाचाराद्धि किलान्यजातिषु पुरा संपूर्णसंमानिताः ।
स्वैराचारनिषङ्गमूढमतयो भ्रष्टाः परं दुःस्थिताः
हा धिक् ! संप्रति हन्त ! हन्त! बहुशोऽज्ञानान्धविप्राः कथम् ॥३॥

वैवर्ण्यविस्खलितवैभवविप्रवृन्दो व्यामोहनाशितविवेकविधर्मशीलः ।
कष्टं ! हि संप्रति निजोदरपूरणार्थ[2]मात्मप्रणाशकरसेवनलोलुभोऽस्ति ॥४॥

प्रयत्नलब्धोऽप्युपजीविकाऽक्षमः कष्टं ! [3]ह्युपाधिर्नियतं किलाधिः ।
लोके स्ववृत्त्या चरतां द्विजानाम् अतः परं भोः ! किमु शोचनीयम् ॥५॥

विहाय मार्गं श्रुतिसम्मतं परम् अपत्रपाः शूद्रवदाचरन्तः ।
स्वधर्मनिष्ठारहिता द्विजास्तेऽप्यधोगतिं यान्ति सुशीघ्रमेव ॥६॥

पुराणशास्त्रप्रथिते प्रशस्ते मार्गे सुसारे न रुचेर्लवोऽपि ।
ज्ञातुं चिदंशं कथमात्मसंस्थं मायाविमूढः प्रभवेत्स मन्दधीः ॥७॥

मनोऽप्रसन्नं कुविकल्पसंगात् सदैव निन्दास्तवदूषिता वाक् ।
तनुर्यथा भोगनिवासभूमिः संस्कारहीना च मतिस्तथैव ॥८॥

लोके प्रशंसाबहुमानलुब्धं ज्ञानं विनिन्द्यं किल दम्भमूलम् ।
सालंकृता वागनुभूतिशून्या वेश्यातनुर्भूषणभूषितेव ॥९॥

कुकल्पनानिर्मितकाव्यबन्धैः सभाकृतैः स्वैरविजल्पनैश्च ।
विद्या(?)-मदोन्मादितचित्तवृत्तयो [4]वर्णाश्रमोच्छेदसमुद्यता इमे ॥१०॥

वृथाभिमानावृतहृत्कपाटं निःशेषनिर्धूतकुलाभिमानम् ।
स्वधर्मसंन्यासमतिभ्रमेण कृत्स्नो गणोऽप्यस्तमितो गुणानाम् ॥११॥

---

१ वर्णाः रंगाः ताम्रपीतादयः पक्षे अक्षराणि २ ब्राह्मणो हीनसेवया (नश्यति) ३ उपाधिः—पदवी (डिग्री) ४ समाजसंहारसमुद्यता इमे ।

संदृश्यते सन्मतिवीर्यलोपात्स्वतापि निःशेषतया दिवंगता ।
किमत्र चित्रं ! यदि तेन भारते स्वराज्यलोपे फलितं श्वराज्यम् ॥१२॥
सुरासुरागी विहिते विरागी कदन्नभोगी विषयैकसंगी ।
दुर्वासनादूषितमानसोऽपि परोपदेशे बत ! पण्डितः सः ॥१३॥
फलं हि बाह्याकृतिदर्शनीयं त्याज्यं यथान्तर्विषमात्रगर्भम् ।
शास्त्रोपदेष्टापि बुधस्तथैव त्याज्यः सदा चेतसि दुष्टधीर्यः ॥१४॥
अन्धस्य लोकोऽप्यखिलोन्ध एव भ्रमी समस्तं भ्रमतीति पश्यति ।
दुष्टा दुराचाररतास्तथैव लोके चरन्तीति किमत्र चित्रम् ! ॥१५॥
यथा पतंगा ज्वलिते प्रदीपे सुखेच्छया स्वान्खलु पातयन्ति ।
प्रविश्य मोहाद्विषयाग्निमेते कुर्वन्ति मूढाश्च तथात्मनाशम् ॥१६॥
तपोबलाधिष्ठितविप्रतेजो लोके [1]यथार्थप्रथितप्रभावम् ।
तद्रश्मिभिस्तेन शिरः स्वकीयं सम्राट् [2]शिवाजिः समलंचकार ॥१७॥
नूनं सदाचारसमृद्धसत्त्वस्तपःप्रकर्षोज्ज्वलिताङ्गभासः ।
स्वाध्यायसक्तः सुरतः [3]स्वभावे स ब्राह्मणो ब्रह्मणि योजितात्मा ॥१८॥
अहो ! ह्ययं को नु महाननर्थो मनो न भावैकदृढं जनानाम् ।
प्राणप्रिये संस्कृतवाक्सुमन्दिरे चिरं हि यद् रक्षति रक्षितं चेत् ॥१९॥
नितान्तदिव्याक्षरपङ्क्तिसंयुता परेशरूपं किल [4]वाङ्मयं या ।
विहाय तां संस्कृतभारतीमहो ! नूनं सुदूरा च समुन्नतिः स्यात् ॥२०॥
श्रुतिपथे श्रुतिरद्य न तिष्ठति स्मृतिपथात्स्मृतयोऽपि विनिःसृताः ।
यदि न सिध्यति संघटनं [5]सतां क्व सुरगीः ! क्व वयं ! क्व च संस्कृतिः ! ॥२१

भक्तिज्ञानविरक्तिमुक्तिविभवादुन्मोचयन्तीं भवाद्
वेदाङ्गादिपुराणसारसरसां सत्यां [6]सुवृत्तां शुचिम् ।
काव्यालंकृतिहारभाणललितां तां मायशोदायिनीं
हंहो ! दुर्मतयस्त्विमेऽमृतमयीं वाणीं मृतां मन्वते ॥२२॥
कलामयी या श्रुतिसौख्यनादिनी प्रशस्तविद्याबलवीर्यशालिनी ।
पदे पदे ज्ञानसुधां स्रवन्ती कथं मृता स्यात्सुरभारती सा ॥२३॥
विद्यावैभवमण्डिताः ! सुमनसः ! सन्तो ! विशालाशयाः !
नीरक्षीरविवेकिनः ! प्रतिदिनं विद्याव्रते तत्पराः ! ।

१ 'शापादपि शरादपि' २ शिवाः आजयः यस्य । ३ 'स्वभावोऽध्यात्ममुच्यते' ४ 'त्वं वाङ्मयः' यस्य वाक्शरीरम्' ५ विदुषाम् ६ वसन्ततिलकादीनि पक्षे सुचरितानि

## डॉ. गजानन बाळकृष्ण पळसुले-विरचितम्

## स्वा. सा व र क र – वा ङ्म य म्

स्वातन्त्र्यवीर–सावरकराणां केषांचित् देशाभिमान-परिप्लुतानाम्, तत्त्वचिन्तनपराणाम्, आत्मचरित.विषयकाणां च काव्यानां सरलः, समूलः संस्कृतानुवादः ।

## अग्निजा

मूल्यम् रू. २–५०

ऐतिहासिक-खण्डकाव्यस्य संरक्षणमन्त्रिभिः मा. यशवन्तराव चव्हाण महादयैः भूरि प्रशस्तस्य समूलः संस्कृतः अनुवादः ।

## कमला

प्रस्तावना–– डॉ. चिन्तामणि द्वा. देशमुख

मूल्यम् : रू. ३

स्वातन्त्र्यवीर सावरकर-चरितम् ।

## विनायक-वीरगाथा

मूल्यम् ३ रू.

स्वतन्त्रं राष्टैक्यबोधकं नाटयरत्नम्

## समानम् अस्तु वो मनः ।

मूल्यम् रू. ३

प्राप्तिस्थानम्––'शारदा-' कार्यालयः ४२५ सदाशिव, पुणे ' २

---

भो भोः [1]संस्कृतमानसाः ! सुकृतिनः ! श्रीशारदासेवकाः !
श्रीशः सोऽद्य मया विनीतमनसा काव्येऽत्र संप्रार्थ्यते ॥२४॥

विद्याबुद्धिमहत्त्ववैभववशान्नन्दन्त्विमे ब्राह्मणाः
वृद्धिं यान्तु तथा स्वकर्मनिरता राजन्यवैश्यादयः ।
दिव्या संस्कृतभारती विजयतां श्रीश ! प्रसादात्तव
भूयाद् भूय इहाचिराद् भरतभूः स्वातन्त्र्यतेजोमयी ॥२५॥

सद्भावनम्रमनसा रचितं मयात्र विद्वत्समागमसुपर्वणि काव्यमेतत् ।
तत्स्यादिहात्रभवतां यदि तोषहेतुः सर्वस्तदा सुफलितः किल मे प्रयत्नः ॥२६

---

१ समुन्नतमानसाः पक्षे संस्कृते–संस्कृतभाषायां मानसं येषां सदृशाः ।

# ' इन्दिराभिनन्दनम् '

भास्वच्चन्द्रनगैः सुनिर्झरयुतैर्गङ्गादिभिः शोभिते
चत्वारिंशदथाब्धिकोटिमनुजैरासेविते भारते
मन्त्रित्वेन सुशोभिता हितपरा ख्याता तु या स्वैर्गुणैः
श्रीमल्लालजवाहरस्य तनुजा सा राजताम् इन्दिरा ।।१।।

नेतारो ह्यरविन्दगान्धितिलकाः शास्त्री-सुभाषादयो
जाता राष्ट्रहितैषिणः प्रमुखतां प्राप्ताश्च ये त्यागिनः ।
मोतीलाल-महोदयः समभवत्तत्रैव सर्वप्रियः
पूर्णं येन समर्पितं निजकुलं राष्ट्रस्य सेवाकृते ।।२।।

जातस्तत्र जवाहरः सुगुणवान् देदीप्यमानो मणिर्
ह्यासीद्यस्य सुशान्तज्ञानकिरणैः सर्वं जगद् भासितम् ।।
लक्ष्मीः सा विजया स्वनामसदृशैः कार्यैर्विजयतेतराम् ।
नेतृत्वं भवतात्सुमङ्गलमयं गान्धीन्दिराया ध्रुवम् ।।३।।

यत्पित्रा च सुलालितः समभवत् संप्रोन्नतो भारतः
संपन्नो नवयन्त्रयानबहुलैर्विज्ञानसंसाधनैः ।।
शस्त्रैरस्त्रबलादिभिर्बहुविधैः शास्त्रैश्च विद्यालयैः ।
तस्मान्मन्त्रिमहत्पदे गुरुतरे सा राजताम् इन्दिरा ।।४।।

श्रीमच्छास्त्रिमहोदयेन च पुनः संरक्षितो यद्यशो ।
जित्वारेर्विपुलं बलं च दलनं संदर्शिता वीरता ।।
शान्त्यर्थं यतता प्रसन्नमनसा स्वात्मार्पितो यत्र वै ।
तस्मिन्मन्त्रिपदे सदा गुरुतरे सा राजताम् इन्दिरा ।।५।।

विद्वांसो हितचिन्तका सुकुशलाः सद्बुद्धयस्त्यागिनो
ज्ञातारो जनजीवनेषु सततं दुःखस्य दैन्यस्य च ।
कार्योत्साहप्रवर्धकाश्च सरला हीनास्तथाऽऽडम्बरै-
रागच्छन्तु हि गांधिमार्गनिरता राज्येषु सन्मन्त्रिणः ।।६।।

सैन्यं स्यात्तु सुसज्जितं बहुविधैः शस्त्रैर्नवीनैः सदा ।
वीरैस्त्यागसमन्वितैर्हि बलिभिः संरक्षणे तत्परैः ।।
दक्षैश्चैव सुशिक्षितैर्नयपरैः प्रोत्साहितैर्नेतृभिः ।
भीतिर्येन भवेत्सदा ह्यरिदले गान्धीन्दिराशासने ।।७।।

वैश्या राष्ट्रहितैषिणः सुमतयो नैवार्यसंशोषकाः
भाभा-शाह-निभा अतीव सरला काले च सर्वस्वदाः ।।
कुर्वन्तो धन-धान्य-शाकवसनैः पूर्णं स्वदेशं सदा
जायन्तां सुखिनो जना हि नितरां गान्धीन्दिराशासने ।।८।।

पृथ्वी स्यात्तु सुशोभिता सुरुचिरैः पुष्पैः फलैरन्विता
वृक्षैः कूपतडागवापिसहितैर्मार्गैश्च संलक्षिता ।।

कुल्याभिश्च सहस्त्रधा सुघटिताभिः सेविता सेतुभिः
सूद्यानैश्च गृहे गृहे विरचितगान्धीन्दिरा शासने ॥९॥
सद्वन्ध्यैर्नलकैस्तथा च चरसैः पातालकूपैस्तथा ॥
नन्दन्तां कृषकाः सदा कृपिरताः युक्ता नवैः साधनैः ।
गोधूमैश्चणकैः समाजतिलकैः सत्कोद्रवैस्तण्डुलैः
रुद्योगैर्विविधैः कुटीरप्रभवैः पूर्णा महद्वैभवैः ॥१०॥
लोकाः कर्मरता भवन्तु सुखिनो बलवीर्ययुक्तास्तथा
सद्धर्मान् च परस्परं हितरता देशोन्नतेः साधकाः ॥
अभ्रान्ताश्च सदाशयाश्च नितरां शिष्टाः सदा संयता ।
नेतृत्वेन प्रशिक्षिता नु महता गान्धीन्दिरायाः सदा ॥११॥
नद्यो वै प्रवहन्तु दुग्धघृतयोर्भक्त्या गवां पोषणात्
बालाः सन्तु सदा प्रफुल्लवदना हृष्टाश्च पुष्टास्तथा॥
छात्राः सन्तु सुशिक्षिता दमयुता साहित्यसंरक्षकाः ॥
सत्यं स्यात्तु प्रकल्पनं हि नितरां गान्धीन्दिरा शासने ॥१२॥
दुष्टानां दमनं द्विषद्-विलयनं विद्वत्-समाराधनम् ॥
मूल्येनैव विना तथैव समये न्यायस्य संप्रापणम् ॥
दीनानां हि सुरक्षणं वितरणं धान्यस्य चाप्यौषधेः
भ्रष्टाचारनिवारणं च भवताद् गान्धीन्दिरा-शासने ॥१३॥
सत्साहित्य-विवर्धनं हितकरं संस्कारकं सर्वदा
विज्ञानं भवताद्धिताय जगतां नो विश्व-विध्वंसकम् ॥
कूटं चैव रिपोर्व्रजेद् विफलतां नूनं महत्कौशलैः
साफल्यं लभतां सदा हितकरं गान्धीन्दिरा-शासनम् ॥१४॥
नूनं भारतसंस्कृतिर्हि जगतां सिद्धा हिता प्राणदा
सा चैवास्ति विनिर्मिता सुतपसा वाल्मीकिव्यासादिभिः ।
अन्यैश्चैव महात्मभिः सुमुनिभिः सा विद्यते संस्कृते
रक्षन्ती ह्युभयं प्रसन्नमनसा सा राजताम् इन्दिरा ॥१५॥
राधाकृष्णमहोदयो हि विदुषां नेता च राष्ट्राधिपः
नन्दाजी यशवन्तरायसहितः यः कामराजो महान् ॥
अन्ये यत्र सभासदश्च नितरां ये राष्ट्रसेवारताः
तस्मिन्मन्त्रिपदे सदा जनहिते सा राजताम् इन्दिरा ॥१६॥

पुर्व्याऊ टौरी, सागर
(म. प्र.)

डॉ. प्रेमनारायण द्विवेदी



अ. भा. संस्कृत-साहित्य-संमेलनम् ।

(सौर आश्विन १०-१८८८ भानौ २ ऑक्टोबर १९६६)

इतिहास-पुराण-विभागाध्यक्षाणाम्

म. म. प्रा. दत्तो वामन पोतदाराणाम् भाषणम् ।

अयि प्रेष्ठाः श्रेष्ठाः विद्वद्वरेण्याः इतिहासपुराणप्रवचनकोविदाः ।

इतिहास-पुराणविभागस्य आध्यक्ष्यं सुहृद्वर्यैः डॉ. मण्डनमिश्रैः मदुपरि स्थापितम् । शास्त्रशिक्षा तु मया न प्राप्ता, किंचित् आङ्ग्लशिक्षा प्राप्ता, तेन आधुनिककालोचित-इतिहासाध्ययने दत्तचित्तोऽहम् । न मन्ये तावत् अस्य विभागस्याध्यक्षपदमलंकर्तुमहम् अधिकारी, तथाऽपि दत्ताज्ञां स्वीकृत्य यथाशक्ति कार्यं निर्वाहयितुमुद्युक्तोऽहम् । सर्वात्मना कार्यसिद्ध्यर्थं प्रयतितव्यम् इत्यस्ति मे निश्चयः । सर्वैः विद्वद्भिः क्षमाशीलैर्भाव्यम् इति विज्ञाप्य, अङ्गीकृतमारभे ।

महान् खलु अयं भारतदेशः, विद्यासाधनार्थं विश्वविख्यातः । श्रुति-स्मृति-पुराणेतिहासानाम् अत्र प्राचीनम् अधिष्ठानं वर्तते, वर्षसहस्राणि यावत् अध्ययनाध्यापनभूमिरियम् ऋषि-मुनि-कविभिः परिपूर्णा पवित्रीकृता च ।

अस्मिन् भारते कोटिशः जनाः सामान्यतः वेदानुयायिन इत्युच्यते । वेदश्रुतिस्तावदपौरुषेया इति प्राचीनानुयायिनः वदन्ति आमनन्ति च । श्रुतिशरणास्ते सर्वे । तां श्रुतिं " इतिहास-पुराणाभ्यां वेदं समुपबृंहयेत् " इति ब्रह्माण्डपुराणोक्त-प्रसिद्धवचनात् इतिहासश्च पुराणं च वेदोपबृंहणकर्मणि साधनभूतौ इति तु स्पष्टमेव ।

तत्रेतां अथर्वश्रुतिं प्रथमतः लक्षीकुर्वन्तु तत्रभवन्तः इति विज्ञापयामि ।

" स उत्तमां दिशमनुव्यऽचलत् । तमृचश्च सामानि च यजूंषि च ब्रह्म चानुव्यऽचलन् । ऋचां च वै साम्नां च यजुषां च ब्रह्मणश्च प्रियं धाम भवति य एवं वेद ॥ स बृहतीं दिशं अनुव्यऽचलत् । तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानुऽव्यचलन् । इतिहासस्य च वै स पुराणस्य च गाथानां च नाराशंसीनां च प्रियं धाम भवति य एवं वेद ॥

( अथर्ववेद १५. ६. ७ – १२ )

अत्र तावत् इतिहासश्च पुराणं चेति द्वयं पृथक्तया निर्दिष्टम् । पुनश्च गोपथब्राह्मणे इतिहासवेदस्य पुराणवेदस्य च पृथक्तया निर्देशः ।

" स दिशोऽन्वैक्षत प्राचीं दक्षिणां प्रतीचीमुदीचीं ध्रुवामूर्ध्वामिति । —ताभ्यः श्रान्ताभ्यः तप्ताभ्यः... पञ्च वेदान्निरमिमत सर्ववेदं इतिहासवेदं पुराणवेदमिति । स खलु प्राच्या एव दिशः सर्ववेदं निरमिमत उदीच्या इतिहासवेदं ध्रुवायाश्चोर्ध्वायाश्च पुराणवेदम् । – स तान्पञ्च वेदानभ्यश्राम्यदभ्यतपत् समतपत्तेभ्यः श्रान्तेभ्यः तप्तेभ्यः सन्तप्तेभ्यः पञ्चमहाव्याहृतीर्निरमिमत वृधत् करद् गुहन् महत् तदिति । वृधदिति सर्ववेदात् । महदितीतिहासवेदात्तदिति पुराणवेदात् । ( गोपथब्राह्मण १. १० )

बृहदारण्यकेऽपि इत्थं द्वैविध्यं प्रदर्शितम्—

"एवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाऽऽङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राणि अनुव्याख्यानानि व्याख्यानानीष्टं हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतानि। अस्यैवैतानि सर्वाणि निःश्वसितानि"।
( बृहदारण्यकोपनिषद् ४.५.११ )

'पुराणमाचक्षीत' इत्यादि वाक्यान्यपि तमेव विषयं स्पष्टीकुर्वन्ति।

आश्लायन श्रौतसूत्रे च—

"नवमेऽहनि ताक्ष्यो वै वैपश्चितस्तस्य वयांसि विशस्तानीमान्यासत इति वयांसि ब्रह्मचारिण इत्युप समानीताः स्युः तानुपदिशति इतिहासो वेदः सोऽयमितीतिहासमाचक्षीत (आश्व. श्रौत)

मनुरपि तथैव

स्वाध्यायं श्रावयेत् पित्र्ये धर्मशास्त्राणि चैव हि।
आख्यानानीतिहासांश्च पुराणानि खिलानि च॥ (मनुः)

तस्मात् इतिहासस्य कोऽर्थः पुराणशब्देन किं ग्राह्यम् इति अवश्यं विवेचनीयं भवति।

निदानभूतमिति ह एवमासींदिति यः कथ्यते स इतिहासः इति निरुक्तभाष्यकारैः व्याख्या कृता। महाभारते इदं द्रष्टव्यम्।

"धर्मार्थकाममोक्षाणां उपदेशसमन्वितम्।
पूर्ववृत्तकथायुक्तम्, इतिहासं प्रचक्षते॥

इतिहासपुराणयोर्भेदः कुत्राऽपि स्पष्टीकृतो न दृश्यते। यथा पुराणविषये "सर्गश्च प्रातिसर्गश्च वंशो मन्वन्तराणि च" इत्यादि प्रसिद्धवचनात् पञ्चलक्षणम् पुराणम् अथवा दशलक्षणम् महापुराणम् इत्यादि पुराणव्याख्यानानि उपलभ्यन्ते तथा निश्चयेन सुस्पष्टतया इतिहासव्याख्या नोपलभ्यते।

महाभारतम् इतिहासरूपम् इति सर्वत्रोक्तं दृश्यते, किन्तु अस्मिन् महाभारते इतिहासरूपे "अत्राप्युदाहरन्ति इममितिहासं पुरातनम्" इत्यादि वचनानि वारंवारम् आगच्छन्ति। अनेन इतिहासरूपे महाभारते पुनश्च उपाङ्गभूतत्वेन इतिहासोल्लेखः प्राप्यते तेन प्राचीनानाम् इतिहासविषयिका कल्पना इतिहासस्य पुराणस्य च भेदः समीचीनतया द्रष्टुं नैव शक्यते। व्याख्या या वा का वा भवतु किन्तु पुराणग्रन्थेषु बहुविधाः विषया आख्यानादीनि राजवंशावलीनामानि प्राप्यन्ते— यथा पारिप्लवा-

ख्यानसमये अश्वमेधयज्ञानुष्ठाने— नवमेऽहनि इतिहासमाऽऽचक्षीत, अष्टमेऽहनि च पुराणमाचक्षीत इति पार्थक्येन भेदः दृश्यते । तत्र ते किं कथयन्ति स्म इति अस्माभिः सम्यक्तया ज्ञातुं न शक्यते–पुराणविभागे अष्टादश पुराणानि प्रसिद्धानि – कानिचित् उपपुराणानि कानिचित् महापुराणानि इत्यादिकाः भेदा दृश्यन्ते। गाथाश्च नाराशंसीश्च आख्यानानि उपाख्यानि चेति यद्यपि स्थले स्थले स्वतन्त्रतया प्रोक्तानि तथापि अयं गाथासंग्रहः अयं नाराशंसीसंग्रहः इमानि आख्यानानि इमानि उपाख्यानानि इति व्याख्यापूर्वकं पार्थक्यं प्रकटीकृत्य पुराण-सदृशं इतिहासग्रन्थविरचनं स्वतन्त्रतया कृतम् न दृश्यते ।

पुराणेभ्यः भिन्ना एषा बलवती इतिहासशाखा पूर्वकाले आसीत् इति दृढमनुमातुं शक्यते । किन्तु स्वतन्त्रसंग्रहग्रन्थाभावात् स्वरूपदर्शनाभावाच्च इतिहासस्य पार्थक्यं न मनसि स्थिरीभवति ।

इतिहासोपनिषद् नाम्नि ग्रन्थे इतिहासनाम्नी कुलविद्या आसीत् इति प्रतिपादितम्—यथा—

**इतिहासोपनिषद्**

" वृषादर्विकुलं ह वै शिबिकुलं बभूव । तस्यायमितिहासः कुलविद्या बभूव। तद्यो ह स्मेममधीते। स ह स्म राजा भवति। स किंचित्प्राप्यान्तर्हितः । सोऽब्रवीत् । यो मामितिहासं ग्राहयेत् वरमस्मै दद्यामिति। ततो ब्राह्मणः संयोगं संयुयुजेत् । तमादित्यपुरुषो भास्करवर्णो निष्क्रम्य त एनं ग्राहयांचकार। तमपृच्छत् कोऽसीति। वा वृषादर्विरिति। तस्माद्य इममितिहासं अधीते। आदित्यलोके स कामचारी भवति। तस्माद्य इममितिहासमुपनीतो माणवको गृह्णीयात् । गृहीत्वाऽथ ब्राह्मणान् श्रावयेत् । मेधावी भवेत् । वर्षशतं च जीवेत् ।। "

इतिहासपुराणम् इति सामासिकं पदमपि लभ्यते । यथा छान्दोग्ये—

ऋग्वेदं भगवोऽध्येमि यजुर्वेदँ सामवेदमाथर्वणं चतुर्थम् इतिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यँ दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याँ सर्पदेवजनविद्यामेतद्भगवोऽध्येमि ।। (छान्दोग्योपनिषत् ७. २. २)

इतिहासस्य पुराणस्य च स्वतन्त्रभेदप्रतिपादकम् गोपथवाक्यम् अस्माभिः उपर्युल्लिखितमस्ति । 'इतिहासपुराणं पञ्चमं वेदानां वेद' इत्यपि वचनम् अस्माभिः पूर्वम् उल्लिखितम् ।

अन्यच्च मात्स्ये उक्तं यत्—

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।

अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः ॥

पुराणमेकमेवासीत् तदा कल्पान्तरेऽनघ ।

अनेन पुराणानां महत्त्वं प्राचीनत्वं च उक्तं किल भवति । बृहदारण्यक-वचनात् अस्य महतोभूतस्य इतिहासपुराणमपि निःश्वसितम् इत्युक्तं तदस्माभिः पूर्वमेव संदर्शितम् ।

कौटिलीय-अर्थशास्त्रे इतिहासविषये इतिहासस्य वेदत्वं इत्थमुल्लिखितम्—

सामर्ग्यजुर्वेदास्त्रयी अथर्ववेदेतिहासवेदौ च वेदाः । (कौटिल्य १. ३)

न केवलं एतत् । इतिहासाध्ययने–

पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेतीतिहासः । (कौटिल्य १. ५.)

इति षडङ्ग-इतिहासाध्ययनं प्राप्यते तेन पुराणमपि इतिहासान्तर्गतं भवति । न केवलम् एतत् किंतु धर्मशास्त्रम् अर्थशास्त्रम् चापि तदन्तर्गतम् इति निष्पद्यते ।

अध्ययनकालविषये तु–

इतिहासपुराणाद्यैः षष्ठं सप्तमं नयेत् ।

स्वाध्यायं श्रावयेत् पित्र्ये धर्मशास्त्राणि चैव हि ॥ इति ।

प्रमाणप्रपञ्चे तु केचित् ऐतिह्यं प्रमाणं गृहीत्वा स्मृतिः प्रत्यक्षम् ऐतिह्यम्, अनुमानं चतुष्टयम् इति प्रमाणचतुष्टयमङ्गीकुर्वन्ति वदन्ति च "ऐतिह्यमनुमानं च प्रत्यक्षमपि चागमम् । ये हि सम्यक् परीक्ष्यन्ते, कुतस्तेषामबुद्धिता ॥ (रामायणम्) किन्तु सांख्याः ऐतिह्यं प्रमाणं नानुमन्यन्ते–यद्यपि पौराणिकाः अष्टप्रमाणवादिनः ऐतिह्यमङ्गीकुर्वन्ति । सांख्यानां मते यच्चानिर्दिष्टप्रवर्तृकं, प्रवादपारंपर्यमात्रं "इति होचुर्वृद्धा" इत्यैतिह्यं यथा "इह वटे यक्षः प्रतिवसति– इति न तत्प्रमाणम् ।

अनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात् आप्तप्रवक्तृकत्वनिश्चये त्वागम इत्युपपन्नं त्रिविधम् प्रमाणमिति ॥ "स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्" ।

इतिहास-पुराणाभ्यां वेदसमुपबृंहणं प्राचीनानां संमतम् । तदुपबृंहणं यावत् श्रुत्यनुकूलं तावदेव ग्राह्यम् विरोधिवचनानां समन्वयः मीमांसा–कोशव्याकरणादिसाहाय्येन साधनीयः । बहुकालात् दीर्घप्रयत्नानुष्ठानोत्तरम् प्राचीनैः प्रांचीनानुसारिभिः समाधानं संप्राप्तम् एतद् गौरवास्पदम् ।

आधुनिकास्तावत् असंतुष्टाः। यानि शास्त्राणि आधुनिकैः प्रयोगबलात् महत्प्रयत्नानुष्ठानाच्च सिद्धिं नीतानि चन्द्रबिम्बपर्यन्तं आकाशमण्डले यानसंचारं यावत् महत्सिद्धयः प्राप्ताः प्रत्यक्षीकृताश्च–तथैव मानुषशास्त्रेष्वपि इतिहास-तत्त्वज्ञानादिषु प्रत्ययोत्पादिनी ज्ञानसंस्थापना कृता तदपि सर्वम् अस्माभिः अनुभूयते– आधुनिकशास्त्रसंभारे इतिहासशास्त्रस्य नूतनं विरचनं सिद्धिं नीतम्। पूर्वकाले राजानः बलिष्ठाः आसन् युद्धप्रवृत्ताश्च। तेषां व्यवहाराणामेव प्राधान्येन वर्णनमासीत् आधुनिकेतिहासग्रन्थेषु। किं तु अग्रे विचारपरिवर्तनं संजातम्। यद् इतिहासो नाम मानवजीवनव्यापी। का वा लोकस्थितिः जनाः किं खादन्ति ब्रुवन्ति पिबन्ति चिन्तयन्ति कुर्वन्ति च एतादृशस्य-लोकजीवनस्य सकारणं प्रत्ययोत्पादकं प्रपञ्चनम् अधुना अपेक्ष्यते। तदर्थं नूतनं प्रमाण-शास्त्रमपि सिद्धीकृतम्। ताम्रपत्र– शिलाशासन– लेखपत्र-मुद्रा-शस्त्रशास्त्र-ग्रंथ-वस्त्रपात्र-स्वास्थ्य-इत्यादि सर्वस्य प्रमाणसाधनानि अवलम्ब्य सर्वस्य अपेक्षितकालकलापस्य सकारणं कालस्थलयुक्तं विवेचनम् अस्मिन् युगे अपेक्ष्यते। एतस्मिन् कर्मणि आश्चर्योत्पादिकां सिद्धिम् प्राप्नुवन्तः आधुनिकाः। न केनापि अभिमानेन वक्तुं शक्यते यत् सर्वं निःसंदेहं सत्यं अस्माभिः हस्तीकृतं किन्तु किंचित् किंचित् सत्यं अस्माभिः अवगतम् तथा सत्यपन्थानुगमनमपि साधितम्। किन्तु अस्मिन् विषये हा हन्त, शतद्वयात् प्राक् वयं केवलम् अन्धकारे मग्नाः। आसीत् वा भारतवर्षे कोऽपि येन शिलोट्टङ्कितांशोकालेखनलिपिर्ज्ञाता लेखानां वाचनं कृतम् तथैव च लेखानां संङ्ग्रहः कृतः विवेचनमपि कृतम् तेषां साहाय्येन यः इतिहासस्य अंशः ज्ञातः स प्रकटीकृतः। यानि ऐतिहासिकानीति निर्दिष्टानि काव्यानि प्राचीनकाले संस्कृतभाषायां विरचितानि लभ्यन्ते तत्र केवलं शब्दावडम्बरम् कल्पनालाघवं च दृश्यते। यद्यपि अस्माकं देशे "देशकालौ संकीर्त्य" इति दण्डकः आसीत्, तर्पणद्वारा मातृपितृपरंपरा ज्ञानसंरक्षणं कर्तव्यमासीत् तथापि सकलदेशजनस्य कृतिः स्थलकालबद्धं च प्रमाणयुक्तं इतिहासकथनं सर्वथैव विरलमासीत्। काश्मीरदेशे राजतरङ्गिणीकर्ता-कल्हणः कनिष्ठिकाधिष्ठितः एक एव। ततः कवीन्द्रः परमानन्दः शिवभारतकर्ता कल्हणपदवीमारोहति। पुराणग्रन्थेषु वंशावलिनिरूपणं यल्लभ्यते तदधुना परीक्षणानन्तरं बहूपयोगीति सिद्धम्। भाटाश्च चारणाश्च पुरोहिताश्च ये यत्र तत्र दृश्यन्ते तैः काचन इतिहासपरम्परा सुरक्षिता। ताम्रपत्रशिलोट्टङ्कनोल्लेखेन ह्येतेन सिद्धप्रायम् यत् लेखनप्रथा आसीत् किन्तु सा परंपरा वृद्धिं न नीता। कुर्वन्तु नाम आक्रमकाः तेषां कर्म। किंतु अस्माभिः अस्मदीयमनुष्ठानं सुचारुरूपेण न कृतम् इत्ययं

दोषः केवलम् अस्मदीय एव। नो चेत् यवनाः अस्मिन् देशे अनेकशतपर्यन्तम् आधिपत्यं चक्रुः तथैव च तेषां पश्चात् यौरोपीयाः। एते यौरोपीयाः दीर्घकालीनं समुद्रतरणं कृत्वा भारते वस्तुव्यापारार्थमागताः। कालेन तैः राज्यमपि साधितम्। तैः यौरोपीयैः भारतीयभाषाणां अभ्यासः कृतः। संस्कृतभाषाऽधीता। यदाऽस्मिन् देशे केचन भारतीय-राजानः राज्यं कुर्वन्ति स्म तस्मिन्नेव काले युरोपखण्डे भारतविषयक-मुद्रितेतिहासग्रन्थानां सर्वत्र प्रचारः आसीत्। सहस्त्रशः यौरोपीयाः अस्मिन् देशे आगताः परन्तु एकोऽपि माणवकः अस्मात् देशात् युरोपखण्डे गतः इति न कुत्रापि दृश्यते। नाऽऽसीत् युरोपखण्डविषयकं ज्ञाननम् अस्मिन् देशे। यदासीत् तत्केवलं तेषां मुखात् यत् प्राप्तं तदेव। नास्माभिः मुद्रितग्रन्थाः अपि अवलोकिताः न भाषाज्ञानम् न लिपिज्ञानम् किमपि नासीत्। वयं तावत् केवलम् अन्धाः संजाताः। एतस्य आज्ञनस्य फलम् अनुभूतम् अस्माभिः। अतिप्राचीनकाले या इतिहासदृष्टिः जागृता दृश्यते सा सर्वार्थेन लुप्ता सचक्षुरपि अचक्षुः इत्याकारकी अवस्था प्राप्ता। इतिहासदृष्टेर्लोपात् तदनवलोकनात् तदनभ्यासात् आग्रहात् – भ्रमाच्च। "ईश्वरेच्छा बलीयसी।" अनेन केवलं शाब्दिकं समाधानं स्यात्। 'दन्तैर्दन्तान् विचूर्णयन्' इति योगवासिष्ठप्रदर्शितरीत्या अस्माभिः प्रयत्नशीलैर्भाव्यम्। जागृतैर्भाव्यम्।

सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा।

——एतद् वचनं सदा संस्मर्तव्यम्। आधुनिकैरपि इतिहासं नाम वस्तु अस्मिन् देशे पूर्वकाले नासीत् इत्ययं भ्रमः परित्याज्यः। इतिहासः पुनः गौरवस्थाने प्रतिष्ठापयितव्यः।

तदर्थम् प्रार्थयामहे– प्रथमं तावत् अस्माकं संस्कृतग्रन्थभाण्डारे यद् यद् इतिहासविषयकं वचनादिकं कोणात् कोणात् प्रापयितुं शक्यते तस्य सर्वस्य प्रथमतः संग्रहणम् एकत्रीकरणं च कर्तव्यम्। तस्मिन् जैनबौद्धादीनां संस्कृतप्राकृतग्रन्थसंग्रहः अपि तस्य महत्वपूर्णत्वात् न कदापि उपेक्षणीयः। अनन्तरं सूक्ष्माध्ययनम्, तदनन्तरम् आधुनिकं शास्त्राध्ययनं तदुत्तरं च इतिहासस्य पुनः प्रतिष्ठा कर्तव्या इति संप्रार्थ्य विरमामि।

("अवर हेरिटेज्"(संस्कृत कॉलेज, कलकत्ता) खण्डः१२, भागः२ (जुलै-डिसेम्बर १९६४) इत्यस्मिन् षाण्मासिके सतीन्द्रचन्द्रन्यायाचार्यैः "**आर्षदर्शनानां वेदमूलकत्वम्**" इति नाम्ना लिखिते लेखे तथा डॉ. अ. द. पुसाळकराणां तत्रैव प्रकाशिते प्रथमे व्याख्याने अस्य विषयस्य कृतः प्रपञ्चः भृशम् उपकारकः सर्वेषाम् इतिहासाभ्यासकानाम् इति निर्देष्टुम् इच्छामः।)

## कविजनहृदयानां कल्पवृक्षं स्मरामः ।

सदयमुदयकूटप्रोद्यते पद्मबन्धौ
जगदिदमपनिद्रं स्फूर्तिमाप्नोति यद्वत् ।
कविजनहृदि तद्वन्नाम यस्य प्रमोदं
जनयति कविसम्राड् भात्यसौ कालिदासः ॥

वल्मीकसंभवपराशरसूनुसेवां
कृत्वा पुरा कमलसंभवधर्मपत्नी ।
भावानुरूप-पदनर्तन-चातुरीं स्वां
वाणी स्वयं विनिदधे कविकालिदासे ॥

सारस्वतोरुविपिनोदरकीर्णशब्द-
रत्नान्यहो मृगयतां कविमार्गभाजाम् ।
मार्गं प्रदर्शयति दीपशिखेव यस्य
काव्यत्रयी स्मरत तं कविकालिदासम् ।

संदर्भरिक्तपदयोजितकाव्यपाशा-
स्तिष्ठन्त्वमी कुकवयो रसविप्रकृष्टाः ।
काव्यत्रयीं दिशति नः कविकल्पवल्लीं
शब्दप्रसूनमकरन्दद-कालिदासः ॥

सद्रत्नभूषणनवाम्बरभूषिताङ्गा-
स्तृप्यन्ति रूपमवलोक्य हि दर्पणेषु ।
तद्वच्च यत्कृतिततौ मुकुरायितायां
क्रीडन्ति काव्यवनिताः स हि कालिदासः ॥

सुरपतिमिव मेघे सर्वदा संचरन्तं
पशुपतिमिव काले सृष्टवन्तं कुमारम् ।
चरमवयसि भक्त्या वाचमप्यर्थयुक्तां
कविजनहृदयानां कल्पवृक्षं स्मरामः ॥

डेक्कन कॉलेज, पुणें ६ पं. कृष्णमूर्तिशर्मा

सखे! सखायः सुहिताः सहायाः सहस्रशः सन्ति ममात्र लोके ।
भक्त्या सुमत्या च पराक्रमेण नैकोऽपि तेषां तुलनास्पदं ते ॥३१॥
मदीयसाम्राज्यविकासहेतोः प्रभूतकष्टैः समरप्रयोगैः ।
अव्याहतं यत्नवता चिराय त्वयाधमर्णत्वमिवास्मि नीतः ॥३२॥
त्वामेव सङ्ग्रामविशेषविज्ञं विज्ञाय मद्दक्षिणबाहुभूतम् ।
न केवलं पामरशत्रुवर्गो दिल्लीपतिश्चापि विकम्पतेऽसौ ॥३३॥
प्रवीर! पैगम्बरसम्प्रसूतः शियाऽभिधानो मतसम्प्रदायः ।
एषोऽन्वयो धर्मपरायणो नः त्वयैव देशेऽत्र दृढप्रतिष्ठः ॥३४॥
साम्राज्यनिष्ठां तव चाविचाल्यां परीक्षितुं भ्रान्तधिया मयैव ।
यत् किञ्चिदत्याचरितं त्वयीषत् तत्क्षालनीयं मनसः समूलम् ॥३५॥
न सोदरत्वेन हि केवलेन भ्रातृत्वमद्धा घटते नराणाम् ।
असोदरत्वे त्वयि यन्मदीयं भ्रातृत्वमन्तःकरणं दधाति ॥३६॥
विधर्मणोः सख्यमशक्यमेव वदन्ति यत्तत् खलु मूर्खजल्पः ।
अकृत्रिमं यत्त्वयि मामकीनं हार्दं सखे मय्यपि तावकीनम् ॥३७॥
मत्साहचर्योचितसन्निवेशस्त्वं दूरदेशे न्यवसश्चिराय ।
अतः परं मत्सविधे सुखेन निवासमाधेहि विजापुरेऽस्मिन् ॥३८॥
क्षमस्व मित्र प्रणयातिरेकात् स्मृतेरपेतं मम यत् कथञ्चित् ।
वृत्तं मनःपद्मविकासकारि त्वत्पुत्रदाराकुशलानुबन्धि ॥३९॥
स्मरामि तं त्वत्तनयं सदैव मृगेन्द्रशावानुगुणं शिवाजिम् ।
निसर्गनिर्भीकमुदग्रशीर्षं स्वत्वाभिमानोन्नतहृत्कपाटम् ॥४०॥
सभामुपेतः स पुराऽस्मदीयाम् उच्चैः स्वनामाकथयत् सगर्वम् ।
स्वरः स तन्नाम च ते च वर्णाः प्रतिध्वनन्तीव सदा मदन्तः ॥४१॥
श्रुतं च निम्बालकरस्य कन्या भार्या तदीया प्रथमा बभूव ।
ततो द्वितीयोऽपि कृतो विवाहः प्रेम्णा त्वया मोहितकन्ययेति ॥४२॥
प्रचीयमानं सुयशस्तदीयं संवर्धमानं विभवं च भव्यम् ।
संशृण्वतो हृष्यति मेऽन्तरात्मा सुहृत्सुतर्द्धिः स्वसुतर्द्धिरेव ॥४३॥
ग्रावाकुले सह्यवनप्रदेशे वनेचरान् कांश्चन संघटय्य ।
आश्रित्य तान् दुर्गमशैलदुर्गान् जाने स्वराज्यं स चिकीर्षतीति ॥४४॥
तद्राज्यमभ्याक्रमितुं विमूढः फतेहखानः कृतवान् प्रयत्नम् ।
तत्खड्गचिह्नं स्रवदस्रधारं बिभर्ति चाद्यापि स पृष्ठभागे ॥४५॥
पुत्रः स ते दुर्धरशक्तिशाली विहाय दिल्लीपतिमित्रभावम् ।
शियाधिराज्येन दधातु सख्यम् इत्येव मे मित्र दृढाभिलाषः ॥४६॥

यत् किञ्चिदद्यावधि तेन धाष्टर्यात् दुर्मन्त्रतो वा जितमस्मदीयम् ।
तदस्तु सर्वं तदधीनमेव शैलेष्वरण्येषु न मेऽभिलाषः ॥४७॥

पितृव्यभावेन हृदि स्थितेन याचे ततः केवलमल्पमात्रम् ।
सौहार्दलक्ष्मेति ददात्वसौ मे कोण्डाणसंज्ञं गिरिदुर्गमेकम् ॥४८॥

नदीमिवान्तर्हितघोरनक्रां वनस्थलीं कण्टकजालपूर्णाम् ।
सुपुष्पितां तां यवनाधिपस्य गिरं जगाहे सभयं शहाजिः ॥४९॥

तथापि कालोचितकृत्यवेदी राजन्यनीतिव्यवहारधीरः ।
प्रमाणयामास स तन्मनीषां ज्ञात्वाऽपि पुत्राभ्युदयान्तरायम् ॥५०॥

पित्राज्ञयैव पितृवाक्यवशंवदोऽपि
पुत्रो ययातिसदृशस्य तदा शहाजेः ।
स्वायत्तमात्मबलहेतुमतीव रम्यं
दुर्गं न यौवननिभं प्रतिदातुमैच्छत् ॥५१॥

कथमपि पितृवाक्यसुप्रतिष्ठा–
परिरक्षार्थमसावनीहमानः ।
स्वविषयकवचास्पदं हि दुर्गं
शिवराजः स ददौ पुनर्विजेतुम् ॥५२॥

**॥ इति श्रीशिवराज्योदये महाकाव्ये "यवनराजकौटिल्यम्" नाम पञ्चदशः सर्गः समाप्तः ॥**

# श्रीशिवराज्योदये महाकाव्ये षोडशः सर्गः ।

एवं भेदप्रयोगेण पितरं मोचयन्नसौ ।
हर्षयन्मातरं चापि पित्रोरानृण्यमाप्तवान् ॥१॥
कारावासविमुक्तं तु शहाजिं यवनाधिपः ।
सच्छद्मनातिस्नेहेन राजधान्यामवासयत् ॥२॥
स दर्शने स्वपुत्रस्य कृष्णस्येवोत्सुकोऽभवत् ।
कारालयाच्चिरान्मुक्तो वसुदेवो यथा पुरा ॥३॥
पितृभक्तः शिवोऽप्यैच्छत् सह मात्रा प्रसन्नया ।
पितुर्बन्धविमुक्तस्य कर्तुं पादाभिवन्दनम् ॥४॥
तेऽन्योन्यसहवासोत्का अपि दूरीकृता मिथः ।
पारतन्त्र्याख्यमोहेन भगवद्-भक्ति-भक्तवत् ॥५॥
कारालयविमुक्तं चाप्यरिराजालयस्थितम् ।
पितरं स पुनर्मेने बन्दीकृतमिवान्यथा ॥६॥
यावद् विजापुरे वासः पितुरासीन्नियन्त्रितः ।
तावद्यवनसाम्राज्यग्रासे सोऽभून्नियन्त्रितः ॥७॥
ततो दुःशासनत्रस्तां याज्ञसेनीमिव प्रजाम् ।
संसान्त्वयितुमारेभे शिवो भीमपराक्रमः ॥८॥
लाक्षागृहनिभे राष्ट्रे म्लेच्छराज्याग्निदीपिते ।
निजबाहुबलेनैकः संररक्ष स्वबान्धवान् ॥९॥
द्यूतादिव्यसने मग्नं धर्मबन्धुजनं निजम् ।
कल्याणमतिरत्यन्तक्रोधेन निरभर्त्सयत् ॥१०॥
म्लेच्छकौरव्यजनितां स्वबन्धुजनदुर्दशाम् ।
पश्यन्निद्धमहामर्षः सदैव समरोत्सुकः ॥११॥
न्यायान्यायविदोऽप्याप्तान् भीष्मद्रोणादिसन्निभान् ।
उपाहसत् परायत्तान् अर्थदास्यपरायणान् ॥१२॥
निहत्य गिरिसञ्चारान् हिडिम्ब-बक-सन्निभान् ।
धनधान्यहरान् चौरान् स लोकर्द्धिमवर्धयत् ॥१३॥
अज्ञातवासरसिकश्छद्मदुर्भगवेशभाग् ।
अनुभावविशेषात्तु व्यस्मापयदनेकदा ॥१४॥
धर्ममूर्ति तुकाराममुपास्यैकान्तभक्तितः ।
सत्तत्त्वबोधं शुश्राव देशकालोचितं ततः ॥१५॥
दृढमूलतयोन्मत्तान् कीचकानिव कीचकान् ।
उत्पाट्याकृतनिर्बाधां पाञ्चालीमिव सत्कृषिम् ॥१६॥

गोरक्षणेऽतिदक्षोऽसौ गोघातग्रहणोद्यतान् ।
शतं विहाय कार्याणि दण्डयामास सत्वरम् ॥१७॥
कुरुवंशमहारण्यसम्भवानधमानिव ।
हठादुन्मूल्य दुर्वृक्षान् प्रावर्तयत सत्पथान् ॥१८॥
सतीदेहपरामर्शमहापातकपाप्मनः ।
भुजं दुःशासनस्येव स्वकीयस्याप्यखण्डयत् ॥१९॥
दुर्योधनोरुसंभेद्यं विनिष्पेष्य शिलोच्चयम् ।
स्वराज्यविजयाध्वानं निष्कण्टकमिवाकरोत् ॥२०॥
रिपुदौरात्म्यसन्तप्तोऽप्यात्मन्यात्मानमाकुलम् ।
विकर्मणः स संयेमे धर्ममेकं प्रमाणयन् ॥२१॥
तनूभूताः प्रवेगाश्च विविधाः पर्वतापगाः ।
आकाङ्क्षा इव पाञ्चाल्या नियम्य समवर्धयत् ॥२२॥
अथ वार्ताहरः कश्चिद् दुःखवार्तां न्यवेदयत् ।
यदसौ श्लाघ्यसम्बन्धी महादाजिर्दिवं गतः ॥२३॥
गोविन्द इव नन्देन येनापदि सुरक्षितः ।
सुहृत्पुत्रः ि वः प्रेम्णा व्रजतुल्ये पुरन्दरे ॥२४॥
चत्वारस्तनयास्तस्य कलिना लोभरूपिणा ।
विरोधभावमापन्ना वर्णा इव परस्परम् ॥२५॥
तं तेषां धर्मबन्धूनां कलहं स्वार्थमूलकम् ।
न विषेहे शिवो धीमान् स्वजनैक्यप्रियो हि सः ॥२६॥
बहुशोऽप्युपदिष्टास्ते विवेकं नैव भेजिरे ।
रसायनं भिषग्दत्तमासन्नमरणा इव ॥२७॥
हितोपदेशविमुखांस्तानाप्तानपि दुर्धरान् ।
निजग्राह स राजर्षिर्विकारानिव संयमी ॥२८॥
ते तु दण्डप्रयोगेण सहसार्जवमागताः ।
दुर्मतीनां प्रबोधे हि दण्ड एव महान् गुरुः ॥२९॥
ततः पुरन्दरे दुर्गे रिपुमर्मविदारणः ।
वीरो नेताजिरायुक्तः कोदण्ड इव सायकः ॥३०॥
तद्दुर्गमतमं दुर्गं नेताजिसमधिष्ठितम् ।
दुर्धर्षमरिभिर्मेने ससिंहमिव काननम् ॥३१॥
जयावलीवनव्याघ्रश्चन्द्ररावाभिधस्तदा ।
शिवोपकारं विस्मृत्य मदेनान्ध इवाभवत् ॥३२॥
म्लेच्छाधिपमनादृत्य यः शिवेनाधिरोपितः ।
सुग्रीव इव रामेण वैभवं मदकारणम् ॥३३॥

दुर्मन्त्रिणः कुमन्त्रेण विनष्टाल्पिष्टधीरसौ ।
अलङ्घ्यां नीतिमर्यादामप्यक्राम्यदनेकदा ॥३४॥
नैवालज्जत चाहर्तुं स्वकीयानामपि श्रियम् ।
यथाऽसौ वानराधीशो भ्रात्रीयामपि हि स्त्रियम् ॥३५॥
संररक्षाधिपत्ये स्वे वनिताशीलहारिणः ।
असुरानिव दण्डार्हान् दशग्रीव इवोन्मदः ॥३६॥
जघान धनलोभान्धो धनमात्रजिहीर्षया ।
ऋजूननपराधांश्च प्रतिवेशिजनानपि ॥३७॥
शिवं स्वधर्मसाम्राज्य-संस्थापनदृढव्रतम् ।
दिद्विषे म्लेच्छसाम्राज्यदास्यलम्पटमानसः ॥३८॥
दण्डनीयापराधस्य तस्यात्मीयतया शिवः ।
औद्धत्यं शिशुपालस्य श्रीकृष्ण इव चक्षमे ॥३९॥
स्वातन्त्र्यराजसूयेष्टौ बाधमानमवेक्ष्य तम् ।
व्यापादयितुमुत्तस्थौ चमूचक्रधरः शिवः ॥४०॥
उचिताक्षरसन्दृब्धं पत्रं सम्प्रेष्य बोधितः ।
दुरहंकारमत्तोऽसौ चुक्रोध हितबोधिने ॥४१॥
हितोपदेशवैमुख्यं तस्यावेक्ष्य शिवस्तदा ।
आचक्राम दुराक्रम्यां लङ्कामिव जयावलीम् ॥४२॥
चपला कपिसेनेव शिवराजचमूरसौ ।
विदध्वंसे ससेनां तां शात्रवीं विपिनस्थलीम् ॥४३॥
ध्वस्ते दुर्गे मृतेऽमात्ये सैन्ये चापि पलायिते ।
प्रययौ रायरीदुर्गं चन्द्ररावो जिजीविषुः ॥४४॥
तमन्वधावत्तत्रापि प्रविलीनं शिवः स्वयम् ।
इन्द्रासनाश्रितं नागं सर्पसत्रार्षमन्त्रवत् ॥४५॥
तन्त्रावापविदा रुद्धो भुजङ्ग इव मण्डले ।
शिवेन कुण्ठितश्चासौ सहसा वशमागतः ॥४६॥
पूर्वं कृतापराधोऽपि शिवेन न स दण्डितः ।
क्षाम्यत्यरातिं प्रायेण निग्रहानुग्रहक्षमः ॥४७॥
निगृहीतोऽपि मूढोऽसावुपजातमचीकरत् ।
शिवराजारिभिः सार्धं स्वविनाशाय केवलम् ॥४८॥
तं रोगमिव दुस्साध्यं स्वराज्यरिपुमान्तरम् ।
शस्त्रशल्यप्रयोगेण स निराकुरुतान्ततः ॥४९॥
प्रमादमोहौ तमसस्तथारेस्तस्य पुत्रकौ ।
जघान सत्त्वशीलोऽसौ स्वातन्त्र्यश्रेयसे शिवः ॥५०॥

मोहितान्वयसम्भूतः सम्भाजिरिति विश्रुतः ।
भ्राता विमातुरौद्धत्यं कृतवान्चन्द्रराववत् ॥५१॥
सैव लोभान्धता सैव न्यायोच्छृङ्खलता तथा ।
दास्याभिमुखता तस्य शिवराजमतापयत् ॥५२॥
अनीतिपरमाचारं न क्षाम्यन्ति गुरोरपि ।
नीतिधर्मप्रणेतारः किं पुनर्मातुलस्य च ॥५३॥
चरितं वीरकृष्णस्य संस्मरन् मातुलं प्रति ।
तत्पथे पदमाधातुं शिवराजः समुद्यतः ॥५४॥
प्रविश्य मातुलावासमकस्मादेव सत्वरम् ।
स्वायत्तमकरोत् सर्वं तदीयं यच्च किञ्चन ॥५५॥
तममर्षज्वलच्चित्तं विरुन्धानं च मातुलम् ।
निग्राह्य प्रेषयामास विमातुः सविधे द्रुतम् ॥५६॥
एवंभूतान् दुराराध्यान् स्वीयानप्यरिसन्निभान् ।
बलादुन्मूल्य बलवान् सोऽभवत् बलवत्तरः ॥२७॥
अधीना चन्द्ररावे ये ये चासन् मातुले तथा ।
तेषु सह्याद्रिदुर्गेषु विरेजे भगवद्ध्वजः ॥५८॥
उद्यन्मार्तण्डसंकाशास्ते स्वातन्त्र्यध्वजाः शुभाः ।
सह्याद्रिमभितः सर्वं दास्यध्वान्तमपाहरन् ॥५९॥
दिल्लीपतिबृहत्कोशकारासु चिरकुण्ठिता ।
व्याकुलेव विमुक्त्यर्थं लक्ष्मीः प्रकृतिचञ्चला ॥६०॥
शिवराजं महावीरं सर्वबन्धनमोचनम् ।
चारवार्तामुखेनेव साचख्यौ स्वमनोव्यथाम् ॥६१॥
स हि लक्ष्मीप्रियो लक्ष्मीं वैदेहीमिव बन्धनात् ।
विमोचयितुमुद्युक्तो रघुवीरसमः शिवः ॥६२॥
दिल्लीन्द्रेण महाराष्ट्रे धनलक्ष्मीर्न्यधीयत ।
गूढं यत्र पुरे तत्र स सेनानुगतो गतः ॥६३॥
प्रसुप्तसैनिकं दुर्गं प्रविश्याहत्य रक्षकान् ।
बृहत्कोशविनिर्बद्धां धनलक्ष्मीममोचयत् ॥६४॥
म्लेच्छाधिपत्यपङ्कोत्थपद्मकोशाद् विनिसृता ।
शिवराजकरस्पृष्टा श्रीः पावित्र्यमिवान्वभूत् ॥६५॥
सिन्धुसागरतीरस्थान् रिपुनिघ्नान् सुदुर्जयान् ।
जेतुं दुर्गान् सुहृद्वीरो रघुनाथो विसर्जितः ॥६६॥
सुवर्ण-लोह-विजय-प्रबलाद्यभिधानसौ ।
पञ्चाशदधिकान् दुर्गान् पञ्चमासान्तरेऽजयत् ॥६७॥

देशे देशे तटाघातोत्थितैर्मेदुरगर्जितैः ।
शिवराजजयोदन्तमब्धिराह दिने दिने ॥६८॥
घननीलाम्बुधौ नौकादण्डाग्रेषु विरेजिरे ।
चिरेणान्तःप्रवालाभाः स्वातन्त्र्यविजयध्वजाः ॥६९॥
स्फुरन्ती ध्वजमालासावरुणा वरुणालये ।
रेजे कुङ्कुमरेखेव लक्ष्मीभालाङ्किता शुभा ॥७०॥
प्रसर्पत्-प्रतिबिम्बेन ध्वजस्यारुणरोचिषा ।
अङ्के लुठन्निवारेजे महाब्धेर्वडवानलः ॥७१॥
ध्वजारुणारुणाभाभिर्हरितोऽप्यरुणीकृताः ।
त्वङ्गन्तोऽब्धेस्तरङ्गास्ते तुरङ्गा इव भास्वतः ॥७२॥
प्रतिबिम्बानि धावन्ति ध्वजानामधिसागरम् ।
जङ्गमानि प्रवालानां द्वीपानीव विरेजिरे ॥७३॥
पश्चिमार्णवतीरस्थाः पाश्चात्यास्ते जलेचराः ।
रत्नकोशानदुस्तस्मै रत्नाकरविलुण्ठितान् ॥७४॥
रत्नकोशमयी नूनं लक्ष्मीः सागरकन्यका ।
विष्णोर्नवावतारस्य शिवस्य पदमाश्रयत् ॥७५॥
उडुपस्थितमाधृत्य नररत्नं शिवाभिधम् ।
अब्धी रत्नाकरोपाधिं मेनेऽन्वर्थं चिरादिव ॥७६॥
सिन्धुदुर्गोच्चशिखरे तस्थिवांसं शिवप्रभुम् ।
आलिङ्गितुमिवाधावत् व्यायतोर्मिकरोऽम्बुधिः ॥७७॥
आत्मजाता लसन्मुक्ताः शिवोष्णीशाग्रगुम्फिताः ।
पश्यन् रत्नाकरः फेनैर्जहासेव मुहुर्मुदा ॥७८॥
त्वरमाणा लहर्योऽब्धौ शिवराजं दिदृक्षवः ।
समुत्थिता इवाराजन् सोत्कण्ठा जलदेवताः ॥७९॥
रिपुवशंगतमेवमहर्दिनं रजतरत्नसुवर्णनिधिं तथा ।
गिरिमहोदधिदुर्गमसौ जयन् ध्रुवमजय्यतमो हि शिवोऽभवत् ॥८०॥

इति श्रीधर-भास्कर-वर्णेकर-विरचिते श्रीशिवराज्योदये महाकाव्ये षोडशः सर्गः समाप्तः ॥ ( शुक्रवासरे २१–८–५९ ख्रिस्ताब्दे )

## श्रीशिवराज्योदये महाकाव्ये सप्तदशः सर्गः ॥

एवमाक्रमणवृद्धवैभवं दुर्गसम्पदतिमात्रदुर्जयम् ।
शाहसूनुमवगम्य शत्रवः प्राज्वलन्निव विजापुरस्थिताः ॥१॥
म्लेच्छशासनधुरे स्थिताऽङ्गना कापि राजजननीव मानिता ।
प्रत्यहं शिवजयैकवार्तया मन्यते स्म निजवार्तमाहतम् ॥२॥
निष्ठुराचरणधिक्कृताऽसुरा सा प्रवृत्तिततिमन्वहं गृहे ।
साममन्यत पुरः समागतां पूर्वपातकपिशाचिकामिव ॥३॥
सा स्वभावभृशकोपनाऽसने संस्थिताऽपि शुकपिच्छनिर्मिते ।
स्थापितामवगमत्स्वकां तनुं तीव्रकण्टकमये महीतले ॥४॥
नर्तकीचरणपातशिञ्जितं गायकीमधुरकण्ठकूजितम् ।
सा नटीनटविटादिभाषितं दिद्विषे सुभगमप्यसह्यवत् ॥५॥
भर्तृपिण्डपरिपुष्टविग्रहान् स्वर्णरत्नधनदानमानितान् ।
वीक्ष्य कांश्चिदधिकारिणो जनान् धिक्चकार कटुशब्दताडनैः ॥६॥
आसुरप्रकृतिरङ्गनाऽप्यसौ संदिधक्षुरिव तं जिजात्मजम् ।
सन्ततस्मरणचिन्तनादिभिः क्रोधपावकमदीपयत् सदा ॥७॥
यामिनीषु शयनेऽतिकोमले बर्हसद्व्यजनवीजिताऽनिशम् ।
अन्तरिद्धतमकोपपावका साऽन्वभूत् खलु चिताधिरोहणम् ॥८॥
स्वप्नलब्धममुमात्मवैरिणं राक्षसीव निजघान सा स्वयम् ।
उत्क्वथत्सविषतैलवर्षणैः प्रस्फुरत्क्रकचभल्लताडनैः ॥९॥
घूकसूकरविरावमप्यसौ नाशिवं क्वचिदभावयत् तथा ।
अर्थसङ्गतमपि स्ववैरिणः संश्रुतं हि शिवनाम तद् यथा ॥१०॥
सा विवृद्धदुरमर्षतापिता वीक्ष्य शत्रुपितरं नृपालये ।
राज्यमन्त्रिपदगौरवान्वितं श्रीशहाजिमवदत् कदाचन ॥११॥
मन्त्रिवर्य किमु ते वदाम्यहं राज्यतन्त्रमधिकृत्य साम्प्रतम् ।
सर्वमेव विदितं भवादृशां यद् विवक्षति मनो ममातुरम् ॥१२॥
मत्पतिप्रणयसख्यभाजनं त्वादृशो न खलु कोऽपि दृश्यते ।
यत्र दुर्धरतमा निजव्यथा कथ्यते हृदयमर्मभित्वरी ॥१३॥
राज्यमेतदिह नो भवादृशैः हिन्दुभिर्यवनराजसङ्गतैः ।
अर्जितं च परिरक्षितं तथा वर्धितं चिरमवाच्यभारते ॥१४॥
आनुवंशिकतयाऽधिकारिणो हिन्दवोऽपरिमिता भवादृशाः ।
शासनेऽत्र विभवं हि भेजिरे दुर्लभं यदितरत्र सर्वथा ॥१५॥

लक्ष्मभिर्नृपतिधारणोचितैः चामरादिभिरसंख्यहिन्दवः ।
अस्मदीय इह राज्यशासने धर्मबान्धववदेव मानिताः ॥१६॥
यद् भवान् भजति राजसंज्ञितं लोकदुर्लभमुपाधिमुत्तमम् ।
तज्जगद्गुरुविजापुराधिपस्नेह एव भवति स्फुटो ध्रुवम् ॥१७॥
सन्ततोपकृतयो हि नोऽखिला वन्ध्यतामिव भजन्ति साम्प्रतम् ।
हन्त हन्त यदसाम्प्रतं किमप्याचरत्यविनयः स ते सुतः ॥१८॥
आत्मनीनमिदमेव शासनं मानयन्निति यथा भवांश्चिरम् ।
तद्धिताय यतते सुविक्रमः किं तथैव न स पुत्रकस्तव ॥१९॥
आसमुद्रतटतः सुदुर्गमाः निर्जिता निखिलदुर्गभूमयः ।
कोशजातमपि लुण्ठितं क्वचित् किं नु सम्मतमिदं भवादृशाम् ॥२०॥
वेत्सि मृत्युवशवर्तिनोदितं स्वामिना तव यदात्मकाङ्क्षितम् ।
विस्मृतं किमधुना निजात्मजप्रीतिमोहितधिया त्वयाऽपि तत् ॥२१॥
स्वामिकार्यपरिपूरणोद्यताः सन्त आत्मगुरुपुत्रबान्धवान् ।
विप्रतीपचरितान् कथञ्चन नैव नैव गणयन्ति कानपि ॥२२॥
राजसेवकजनोचितं न ते हिन्दवो जहति धर्ममुत्तमम् ।
आत्मदेहकुलसंक्षयेऽप्यहो विस्मृता किमिति सा परम्परा ॥२३॥
त्वत्सुतस्य चरितं मदोद्धतं दीर्घकालमवहेलितं मया ।
राज्यकण्टकविमर्दनोद्यतां विद्धि मां खरकुठारसोदरीम् ॥२४॥
यन्मदीयमवगूहितं चिरात् क्रूरकर्म तव तन्निवेदये ।
वाहिनीपतिरसौ मुहम्मदो मारितः खलु मयैव निर्दयम् ॥२५॥
ये च केचन तथेतरे पुनर्दुर्जना हि बहलोलसन्निभाः ।
निर्हता इह विजापुरे पुरा विद्धि तत्खलु ममैव चेष्टितम् ॥२६॥
हन्त सन्ति शतशः सहस्रशो दन्तिनश्च तुरगाः रणोत्सुकाः ।
क्रीतदासवदसंख्यपत्तयो नाबलां दलबलादवेहि माम् ॥२७॥
देहलीपतिमपीद्धशासनं शक्तिरस्ति मम जेतुमञ्जसा ।
किं ब्रवीमि तव पुत्रकं पुनर् वन्यमर्कटपरीतमेककम् ॥२८॥
यः स च प्रथमपुत्रकस्तव सङ्गरे कपटमृत्युमाप्तवान् ।
स्पष्टमद्य तव वच्मि निर्भयं प्रेरणा मम हि तत्र कारणम् ॥२९॥
पुत्रवानसि तथापि साम्प्रतमेककेन कुसुतेन येन च ।
सोऽपि मत्प्रकुपितैकपात्रतां याति चेदसुत एव नङ्क्षसि ॥३०॥
ज्ञायते तव कलत्रमुत्तमं पुत्रनिःश्वसितमात्रजीवितम् ।
वीक्ष्य मत्प्रकुपिताहतं सुतं छिन्नभिन्नहृदयं भविष्यति ॥३१॥

तावकीनमपि वित्तजीवितं मामकीनमवलम्बते मतम् ।
तद् विमर्शपथमात्मनो धियं पुत्रमोहविषमां प्रचोदय ॥३२॥
दुर्वचोभिरनभिस्फुटो निजः क्रोध इत्यनतितुष्टधीरिव ।
भूरिपानपरिसञ्चितं हृदि धूम्रमावमदसौ मुहुर्मुखात् ॥३३॥
इत्थमुग्रतमभावदुःसहं म्लेच्छभूपतिविमातृभाषितम् ।
श्रीशिवस्य गुरुणा तदाददे कालकूटमिव देहदाहकम् ॥३४॥
विक्रियां स्वमनसः प्रशामयन् सुस्मितं च पुनरुक्ततां नयन् ।
कृत्रिमप्रियतरं स कालवित् भाषितुं समुचितं प्रचक्रमे ॥३५॥
राजमातरुदितं तवोज्ज्वलं स्वीयराज्यभविकैकदीपितम् ।
स्पर्शतः खलु मदीयमादहत् किल्मिषं हृदयगह्वरोदितम् ॥३६॥
राजसेवकजनोचितस्त्वया मादृशां सुविहितोऽभ्यधायि यः ।
धर्म एव उचितः स सर्वथा सर्वकिङ्करगणस्य भूतले ॥३७॥
न स्फुरन्ति सहसा सुभाषितान्युत्कटानुभवहीनसंविदः ।
त्वद्वचस्सु सुपरिस्फुटाऽधुना ह्युत्कटानुभवगाढतैव ते ॥३८॥
मत्सखस्य तव भर्तुरीहितं देहपातसमये निवेदितम् ।
विस्मरेत् कथमयं जनोऽञ्जसा तत्कृतोपकृतिसन्तति स्मरन् ॥३९॥
राज्यदास्यनिरतो ह्ययं जनः पुत्रदारमपि यौवनेऽजहत् ।
स्वामिशब्दपरिपूर्तयेऽकरोत् सौख्यमात्मजनुषस्तृणास्पदम् ॥४०॥
धीमता स्वगृहरन्ध्रमात्मना न प्रकाश्यमिति नीतिरुच्यते ।
तद् विरुद्धमधुनाऽऽत्मवत्तया त्वत्पुरः किमपि वक्तुमुत्सहे ॥४१॥
वेत्सि हिन्दुवनिता पतिं प्रियं दिव्यदैवतधियाऽर्चयन्ति ताः ।
हन्त किन्तु गृहिणी ममाप्रियं मां विरोद्धुमिव वर्तते सदा ॥४२॥
आत्मनोऽपि सहधर्मचारिणी विप्रियं व्यवहरत्यनारतम् ।
एवमन्यजनसम्मुखं वदन् ब्रूहि कः खलु न लज्जते पुमान् ॥४३॥
तन्मया निजकुटुम्बजीवनात् सा सरोषमचिरात् पृथक् कृता ।
पुत्रमेककममुं कुलालितं वर्तयत्यसदृशं दुराग्रहात् ॥४४॥
वन्यपर्वतचरैश्चरत्यसौ दुष्टतापसवशंगतस्तथा ।
नेहते सह मया स भाषितुं कं दुनोति न सुतो विरोधकः ॥४५॥
मूढधीरपि च देहलीपतेर्दास्यमिच्छति कुमित्रबोधितः ।
मद्विरुद्धमिव वर्तितुं सदा यत्नवान् स खलु किंसुतो मम ॥४॥
यच्चिरं बत मयान्वभूयत बन्धनं स्वसुहृदोऽपि शासने ।
वेद्मि पुत्रकुचरित्रतः पृथक् तत्र हेतुरपरो न कश्चन ॥४७॥

आत्मनो दलबलं त्वयोदितं तन्न वेत्ति खलु कोऽत्र भूतले ।
ख्यापितं यदवदारिताङ्गकैः शत्रुभिः समरतः पलायितैः ॥४८॥

पुत्रदोषविहितं पितुर्भवेद् दण्डनं यदपि राजशासने ।
पात्रमस्मि खलु तस्य सर्वथा ब्रूहि किं नु करवाणि साम्प्रतम् ॥४९॥

इत्थं प्रकोपभृशलोहितलोचनां ताम्
आवेद्य भूपतिविमातरमत्यसत्यम् ।
मन्दीचकार रुषमीषदिव प्रयुक्त्या
काले मृषा वचनमाहुरगर्हणीयम् ॥५०॥

सपदि स नयविच्चरं स्वमेकं
शिवविपदं परिभाव्यभाविनीं ताम् ।
गदितुमनुचितायतिं प्रवृत्ति
नयविज्ञे विससर्ज रामदासे ॥५१॥

**॥ इति श्रीशिवराज्योदये महाकाव्ये सप्तदशः सर्गः ॥**
(समाप्तोऽयं सर्गः भाद्रपदे सुदि १ तिथौ ३–९–५९ ख्रिस्ताब्दे )

## ॥ श्रीशिवराज्योदये महाकाव्ये अष्टादशः सर्गः ॥

(सच्चित्प्रमोदमयमात्मनि जृम्भमाणमात्मानुभूतिविषयं विषयातिरिक्तम्।
सत्साहितीमुकुरबिम्बितमुज्ज्वलाभं सारस्वतं किमपि तत्त्वमुदेतु चित्ते॥)

अथापरेद्युर्दृढगूढरोषा विजापुरेशस्य सपत्नमाता ।
सर्वानकस्मादधिकारिवर्यान् आकारयामास सभालयान्तः ॥१॥

अलङ्घ्यमादेशमवाप्य तस्या नृपालमातुर्भृशकोपनायाः ।
शतं स्वकार्याणि विहाय काले प्रपेदिरे सर्वत एव सर्वे ॥२॥

आकस्मिकामन्त्रणमूलभूतं प्रयोजनं ज्ञातुमशक्नुवानाः ।
स्मृत्वाऽधमत्वं क्षितिभृद्विमातुः शशङ्किरे दुर्गतिमापतन्तीम् ॥३॥

हृदि स्थितां भीतिमपह्नुवानाः स्मितेन हास्येन च नर्मवाचा ।
अन्योन्यमैक्षन्त निगूढशङ्का-चलाचलापाङ्गकटाक्षपातैः ॥४॥

केऽप्यस्मरन् राजविमातृकोपतनूनपाद्दग्धतनूञ्जनान् स्वान् ।
तथैव संकल्प्य निजामवस्थां रोमाञ्चितं स्वाङ्गमिवाजुगूहुः ॥५॥

पप्रच्छुरन्ये निकटस्थितानां कुटुम्बवार्तान्यसकृत् सशङ्कम् ।
अभद्रशङ्काकुलमानसानां जिज्ञासुता वृद्धिमिवेत्यकस्मात् ॥६॥

राजानमायान्तमवेत्य दूरात् बन्दीरितोच्चैर्जयजीवघोषात् ।
प्रसन्नमालोक्य तदीयमास्यमाश्वासयन्नात्मनि चात्मनैव ॥७॥

यावत् स राजाऽसनमभ्युपैति तिरस्करिण्यन्तरुपैच्च तावत् ।
सम्भ्रान्तदासीजनसम्भ्रमेण संसूचिताभ्यागमना विमाता ॥८॥

राजादरार्थं द्रुतमुत्थितानां सदःस्थितानां श्रुतिदृष्टिशक्तिः ।
आच्छादनीं प्रत्यतिसम्भ्रमेण केन्द्रीबभूवेव सभीतिशङ्कम् ॥९॥

स्वमासनं प्राप्य नरेशमाता रूक्षस्वरेणाह निषीदतेति ।
तत्कालमेवाखिलसभ्यवर्गो यथास्थितं संस्थितवान् विनम्रः ॥१०॥

सिंहासनेऽस्थात् स नराधिपोऽपि विमूढवत् सभ्यजनेन साकम् ।
कर्तव्यमात्मोचितमप्रजानन्नितस्ततः शून्यमना ददर्श ॥११॥

तदा श्मशानोपवनप्रशान्ते सभालये घस्मरवायसीव ।
कठोररूक्षस्वरमाश्रयन्ती क्रोधप्रदीप्ता यवनी जगर्ज ॥१२॥

धिगस्तु वः शासनपिण्डपुष्टाः साम्राज्यवृक्षाश्रितदुष्टकीटाः ।
सिताऽसितश्मश्रुमलीमसानि न द्रष्टुमिच्छामि भवन्मुखानि ॥१३॥

नपुंसकाः पुंस्करभूषणानि शस्त्राणि युष्मत्कटिलम्बितानि ।
वैरिप्रहारेष्वलसान्यमूनि तुदन्ति चित्तं मम दुःखतप्तम् ॥१४॥

